वाजसनेयिमाध्यन्दिनशुक्ल-

# यजुर्वेदसंहिता

## अथ प्रथमोऽध्यायः

ऋषिः इषे त्वादिखम्ब्रह्मान्तानां सामान्यतो विवस्वानृषिः । विशेषतश्च इषे त्वादिप्रथमाध्यायगतानां दर्शपौर्णमासमन्त्राणां प्राजापत्यः परमेष्ठी प्राजापत्या देवा वा ऋषयः । तत्राप्यष्टाविंश्याः 'पुरा क्रूरस्य' इत्यस्याः कण्डिकाया अघशंसश्च ॥

देवता (१) प्रथमायाः कण्डिकायाः 'इषे त्वा' 'ऊर्जे त्वा' 'यजमानस्य पशून्' इत्येषां मन्त्राणां शाखा, 'वायव स्थ' इत्यस्य वायुः, 'देवो वः' इत्यस्येन्द्रः ।

(२) 'वसोः पवित्रम्' इत्यस्य वायुः, 'द्यौरसि' 'मातरिश्वनः' इत्यनयोरुखा ।

(३) 'वसोः पवित्रम्' इत्यस्य वायुः, 'देवस्त्वा' इत्यस्य पयः, 'कामधुक्षः' इत्यस्य प्रश्नः ।

(४) 'सा विश्वायुः' 'सा विश्वकर्मा' 'सा विश्वधायाः' इत्येषां गौः, 'इन्द्रस्य त्वा' इत्यस्येन्द्रः, 'विष्णो हव्यम्' इत्यस्य पयः ।

(५) 'अग्ने व्रतपते' 'इदमहम्' इत्यनयोरग्निः ।

(६) 'कस्त्वा' इत्यस्य प्रजापतिः, 'कर्मणे वाम्' इत्यस्य स्रुक् शूर्पश्च ।

(७) 'प्रत्युष्टम्' 'निर्ष्टप्तम्' इत्यनयो रक्षः, 'उर्वन्तरिक्षम्' इत्यस्यान्तरिक्षम् ।

(८) 'धूरसि धूर्व' इत्यस्य धूः, 'देवानामसि' इत्यस्य आनः ।

(९) 'विष्णुस्त्वा' इत्यस्य आनः, 'उरु वाताय' 'यच्छन्ताम्' इत्यनयोर्हविः, 'अपहतम्' इत्यस्य रक्षः ।

(१०) 'देवस्य त्वा' इत्यस्य सविता, 'अग्नये जुष्टम्' इत्यस्याग्निः, 'अग्नीषोमाभ्याम्' इत्यस्याग्नीषोमौ ।

(११) 'भूताय त्वा' इत्यस्य हविः, 'स्वरभिविख्येषम्' इत्यस्य सूर्यः, 'दृꣳहन्ताम्' इत्यस्य गृहाः, 'उर्वन्तरिक्षम्' इत्यस्यान्तरिक्षम्, 'पृथिव्यास्त्वा' इत्यस्य हव्यम् ।

(१२) 'पवित्रे स्थ' इत्यस्य पवित्रे, 'सवितुर्वः' 'देवीरापः' इत्यनयोरापः ।

(१३) 'प्रोक्षिता स्थ' इत्यस्यापः, 'अग्नये त्वा' इत्यस्याग्निः, 'अग्नीषोमाभ्याम्' इत्यस्याग्नीषोमौ, 'दैव्याय कर्मणे' इत्यस्य पात्राणि ।

(१४) 'शर्मासि' 'अदित्यास्त्वक्' इत्यनयोः कृष्णाजिनम्, 'अवधूतम्' इत्यस्य रक्षः, 'अद्रिरसि' 'ग्रावासि' इत्यनयोरुलूखलम् ।

(१५) 'अग्नेस्तनूः' इत्यस्य हविः, 'बृहद्ग्रावा' 'स इदम्' इत्यनयोर्मुसलम्, 'हविष्कृत' इत्यस्याधिदैवतं वाक्, अधियज्ञश्च पत्नी ।

(१६) 'कुक्कुटोसि' इत्यस्य वाक्, 'वर्षवृद्धम्' इत्यस्य शूर्पम्, 'प्रति त्वा' इत्यस्य हविः, 'परापूतम्' 'अपहतम्' इत्यनयो रक्षः, 'वायुर्वः' 'देवो वः' इत्यनयोस्तण्डुलाः ।

(१७) 'धृष्टिरसि' इत्यस्योपवेषः, 'अपाग्ने' 'आ देवयजम्' इत्यनयोरग्निः, 'ध्रुवमसि' इत्यस्य कपालानि ।

(१८) 'अग्ने ब्रह्म' इत्यस्याग्निः, 'धरुणमसि' 'धर्त्रमसि' 'विश्वाभ्यस्त्वा' 'चित स्थ' 'भृगूणाम्' इत्येषां कपालानि ।

(१९) 'शर्मासि' 'अदित्यास्त्वक्' इत्यनयोः कृष्णाजिनम्, 'धिषणासि' इत्यस्य दृषत्, 'दिव स्कम्भनीः' इत्यस्य शम्या, 'धिषणासि' इत्यस्योपलः ।

(२०) 'धान्यमसि' 'प्राणाय त्वा' 'उदानाय त्वा' 'व्यानाय त्वा' 'दीर्घामनु' 'चक्षुषे त्वा' इत्येषां हविः, 'महीनाम्' इत्यस्याज्यम् ।

(२१) 'देवस्य त्वा' इत्यस्य सविता, 'सं वपामि' इत्यस्य हविः, 'समापः' इत्यस्यापः ।

(२२) 'जनयत्यै त्वा' 'इदमग्नेः' 'इदमग्नीषोमयोः' इत्येषां हविः, 'इषे त्वा' इत्यस्याज्यम्, 'घर्मोसि' 'उरु प्रथस्व' 'अग्निष्टे' 'देवस्त्वा' इत्येषां पुरोडाशः ।

(२३) 'मा भेः' 'अतमेरुः' इत्यनयोः पुरोडाशः, 'त्रिताय त्वा' इत्यस्य त्रितः, 'द्विताय त्वा' इत्यस्य द्वितः, 'एकताय त्वा' इत्यस्य एकतः ।

(२४) 'देवस्य त्वा' इत्यस्य सविता, 'आददेध्वरकृतम्' 'इन्द्रस्य बाहुः' इत्यनयोः स्फ्यः ।

(२५) 'पृथिवि देवयजनि' 'वर्षतु ते' इत्यनयोर्वेदिः, 'व्रजङ्गच्छ' इत्यस्य पुरीषम्, 'बधान देव' इत्यस्य सविता ।

(२६) 'अपाररुम्' 'अररो दिवम्' इत्यनयोरसुरः, 'व्रजङ्गच्छ' इत्यनयोः पुरीषम्, 'वर्षतु ते' इत्यनयोः 'द्रप्सस्ते' इत्यस्य च वेदिः, 'बधान देव' इत्यनयोः सविता ।

(२७) 'गायत्रेण त्वा' 'त्रैष्टुभेन त्वा' 'जागतेन त्वा' इत्येषां विष्णुः, 'सुक्ष्मा च' 'स्योना च' 'ऊर्जस्वती च' इत्येषां वेदिः ।

(२८) 'पुरा क्रूरस्य' इत्यस्य चन्द्रमाः, 'प्रोक्षणीरासादय' इति प्रैषः, 'द्विषतो वधः' इत्यस्य स्फ्यः ।

(२९) 'प्रत्युष्टꣳ रक्षः' इत्यनयोः 'निष्टप्तꣳ रक्षः' इत्यनयोश्च रक्षः, 'अनिशितोसि' इत्यस्य स्रुवः, 'अनिशितासि' इत्यस्य स्रुक् ।

(३०) 'अदित्यै रास्ना' 'विष्णोर्वेष्पः' इत्यनयोर्योक्त्रम्, 'ऊर्जे त्वा' 'अदब्धेन त्वा' (३१) 'सवितुस्त्वा' 'तेजोसि' 'धाम नामासि' इत्येषामाज्यम्, 'सवितुर्वः' इत्यस्यापः ॥

छन्दः (१) 'इषे त्वा' 'ऊर्जे त्वा' इत्यनयोरनुष्टुप्, (२८) 'पुरा क्रूरस्य' इत्यस्य त्रिष्टुप् ॥

अनुवाकः

॥ श्रीवेदपुरुषाय नमः ॥ हरिःॐ ॥

॥१॥ इषे त्वोर्ज्जे त्वा वायव स्थ देवो वः सविता प्प्रार्प्पयतु श्रेष्ठतमाय कर्म्मणऽआप्प्या-
यद्ध्वमघ्न्याऽइन्द्राय भागम्प्प्रजावतीरनमीवाऽअयक्ष्मा मा व स्तेनऽईशत माघशꣳसो
ध्रुवाऽअस्स्मिन्गोपतौ स्यात बह्वीर्य्यजमानस्य पशून्पाहि ॥१॥

॥२॥ वसोः पवित्रमसि द्यौरसि पृथिव्यसि मातरिश्श्वनो घर्म्मोसि विश्श्वधाऽअसि ।
परमेण धाम्ना दृꣳहस्व मा ह्वार्म्मा ते यज्ञपतिर्ह्वार्षीत् ॥२॥

वसोः पवित्रमसि शतधारं वसोः पवित्रमसि सहस्रधारम् ।
देवस्त्वा सविता पुनातु वसोः पवित्रेण शतधारेण सुप्वा कामधुक्षः ॥३॥
सा विश्वायुः सा विश्वकर्म्मा सा विश्वधायाः ।
इन्द्रस्य त्वा भागꣳ सोमेनातनच्मि विष्ण्णो हव्यꣳ रक्ष ॥४॥
॥३॥ अग्ने व्रतपते व्रतञ्चरिष्ष्यामि तच्छकेयन्तन्मे राध्यताम् ।
इदमहमनृतात्सत्त्यमुपैमि ॥५॥
कस्त्वा युनक्ति स त्वा युनक्ति कस्मै त्वा युनक्ति तस्मै त्वा युनक्ति ।
कर्म्मणे वां वेषाय वाम् ॥६॥
प्रत्युष्टꣳ रक्षः प्रत्युष्टाऽअरातयो निष्टप्प्तꣳ रक्षो निष्टप्प्ताऽअरातयः ।
उर्वन्तरिक्षमन्वेमि ॥७॥
धूरसि धूर्व धूर्वन्तन्धूर्व तं योऽस्मान्धूर्वति तन्धूर्व यं वयन्धूर्वामः ।
देवानामसि वह्नितमꣳ सस्नितमम्पप्रितमञ्जुष्टतमन्देवहूतमम् ॥८॥
अह्रुतमसि हविर्द्धानन्दृꣳहस्व मा ह्वार्म्मा ते यज्ञपतिर्ह्वार्षीत् ।
विष्णुस्त्वा क्रमतामुरु वातायापहतꣳ रक्षो यच्छन्ताम्पञ्च ॥९॥
देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्याम्पूष्ण्णो हस्ताभ्याम् ।
अग्नये जुष्टङ्गृह्णाम्यग्नीषोमाभ्याञ्जुष्टङ्गृह्णामि ॥१०॥
भूताय त्वा नारातये स्वरभिविख्येषन्दृꣳहन्तान्दुर्य्याः पृथिव्यामुर्वन्तरिक्षमन्वेमि
पृथिव्यास्त्वा नाभौ सादयाम्यदित्याऽउपस्थेऽग्ने हव्यꣳ रक्ष ॥११॥
॥४॥ पवित्रे स्थो वैष्णव्यौ सवितुर्वः प्रसवऽउत्पुनाम्यच्छिद्रेण पवित्रेण सूर्य्यस्य
रश्मिभिः । देवीरापोऽअग्रेगुवोऽअग्रेपुवोऽग्रऽइममद्य यज्ञन्नयताग्रे यज्ञपतिꣳ
सुधातुं यज्ञपतिन्देवयुवम् ॥१२॥
युष्माऽइन्द्रोऽवृणीत वृत्रतूर्य्ये यूयमिन्द्रमवृणीध्वं वृत्रतूर्य्ये प्रोक्षिता स्थ ।
अग्नये त्वा जुष्टम्प्रोक्षाम्यग्नीषोमाभ्यान्त्वा जुष्टम्प्रोक्षामि ।
दैव्याय कर्म्मणे शुन्धध्वन्देवयज्यायै यद्वोऽशुद्धाः पराजघ्नुरिदं वस्तच्छुन्धामि ॥१३॥
॥५॥ शर्म्मास्यवधूतꣳ रक्षोवधूताऽअरातयोदित्यास्त्वगसि प्रति त्वादितिर्वेत्तु ।
अद्रिरसि वानस्पत्यो ग्रावासि पृथुबुध्नः प्रति त्वादित्यास्त्वग्वेत्तु ॥१४॥
अग्नेस्तनूरसि वाचो विसर्जनन्देववीतये त्वा गृह्णामि बृहद्ग्रावासि वानस्पत्यः
सऽइदन्देवेभ्यो हविः शमीष्व सुशमि शमीष्व । हविष्कृदेहि हविष्कृदेहि ॥१५॥

कुक्कुटोसि मधुजिह्वऽइषमूर्ज्जमावद त्वया वयꣳ सङ्घातꣳसङ्घातञ्जेष्म वर्षवृद्धमसि
प्रति त्वा वर्षवृद्धं वेत्तु परापूतꣳ रक्षः परापूताऽअरातयोपहतꣳ रक्षो वायुर्वो
विविनक्तु देवो वः सविता हिरण्यपाणिः प्रति गृभ्णात्वच्छिद्रेण पाणिना ॥१६॥
॥६॥ धृष्टिरस्यपाग्नेऽअग्निमामादञ्जहि निष्क्रव्यादꣳ सेधा देवयजं वह । ध्रुवमसि पृथिवी-
न्दृꣳह ब्रह्मवनि त्वा क्षत्रवनि सजातवन्युपदधामि भ्रातृव्यस्य वधाय ॥१७॥
अग्ने ब्रह्म गृभ्णीष्व धरुणमस्यन्तरिक्षन्दृꣳह ब्रह्मवनि त्वा क्षत्रवनि
सजातवन्युपदधामि भ्रातृव्यस्य वधाय । धर्त्रमसि दिवन्दृꣳह ब्रह्मवनि त्वा
क्षत्रवनि सजातवन्युपदधामि भ्रातृव्यस्य वधाय । विश्वाभ्यस्त्वाशाभ्यऽउप-
दधामि चित स्थोर्ध्वचितो भृगूणामङ्गिरसान्तपसा तप्यध्वम् ॥१८॥
॥७॥ शर्म्मास्यवधूतꣳ रक्षोवधूताऽअरातयोदित्यास्त्वगसि प्रति त्वादितिर्वेत्तु । धिष-
णासि पर्वती प्रति त्वादित्यास्त्वग्वेत्तु दिव स्कम्भनीरसि धिषणासि पार्वतेयी प्रति
त्वा पर्वती वेत्तु धान्यमसि ॥१९॥
धान्यमसि धिनुहि देवान्प्राणाय त्वोदानाय त्वा व्यानाय त्वा । दीर्घामनु
प्रसितिमायुषे धान्देवो वः सविता हिरण्यपाणिः प्रतिगृभ्णात्वच्छिद्रेण पाणिना
चक्षुषे त्वा महीनाम्पयोसि ॥२०॥
॥८॥ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्याम्पूष्णो हस्ताभ्याम् ।
सं वपामि समापऽओषधीभिः समोषधयो रसेन ।
सꣳ रेवतीर्ज्जगतीभिः पृच्यन्ताꣳ सम्मधुमतीर्म्मधुमतीभिः पृच्यन्ताम् ॥२१॥
जनयत्यै त्वा संयौमीदमग्नेरिदमग्नीषोमयोरिषे त्वा घर्म्मोसि विश्वायुरुरुप्रथाऽउरु
प्रथस्वोरु ते यज्ञपतिः प्रथतामग्निष्टे त्वचम्मा हिꣳसीद्देवस्त्वा सविता श्रपयतु
वर्षिष्ठेधि नाके ॥२२॥
मा भेर्म्मा संविक्थाऽअतमेरुर्य्यज्ञोतमेरुर्य्यजमानस्य प्रजा भूयात्त्रिताय त्वा द्विताय
त्वैकताय त्वा ॥२३॥
॥९॥ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्याम्पूष्णो हस्ताभ्याम् । आददेध्वरकृतं-
न्देवेभ्यऽइन्द्रस्य बाहुरसि दक्षिणः सहस्रभृष्टिः शततेजा वायुरसि तिग्मतेजा
द्विषतो वधः ॥२४॥
पृथिवि देवयजन्योषध्यास्ते मूलम्मा हिꣳसिषं व्रजङ्गच्छ गोष्ठानं वर्षतु ते द्यौर्बधान

देव सवितः परमस्यां पृथिव्याꣳ शतेन पाशैर्योऽस्मान्द्वेष्टि यं च वयं द्विष्मस्-
तमतो मा मौक् ॥२५॥
अपाररुं पृथिव्यै देवयजनाद्वध्यासं व्रजं गच्छ गोष्ठानं वर्षतु ते द्यौर्बधान देव सवितः
परमस्यां पृथिव्याꣳ शतेन पाशैर्योऽस्मान्द्वेष्टि यं च वयं द्विष्मस्तमतो मा मौक् ।
अररो दिवं मा पप्तो द्रप्सस्ते द्यां मा स्कन्व्रजं गच्छ गोष्ठानं वर्षतु ते द्यौर्बधान
देव सवितः परमस्यां पृथिव्याꣳ शतेन पाशैर्योऽस्मान्द्वेष्टि यं च वयं द्विष्मस्त-
मतो मा मौक् ॥२६॥
गायत्रेण त्वा च्छन्दसा परिगृह्णामि त्रैष्टुभेन त्वा च्छन्दसा परिगृह्णामि जागतेन
त्वा च्छन्दसा परिगृह्णामि । सुक्ष्मा चासि शिवा चासि स्योना चासि सुषदा चास्यू-
र्जस्वती चासि पयस्वती च ॥२७॥
पुरा क्रूरस्य विसृपो विरप्शिन्नुदादाय पृथिवीं जीवदानुम् । यामैरयंश्चन्द्रमसि स्वधा-
भिस्तामु धीरासोऽअनुदिश्य यजन्ते । प्रोक्षणीरासादय द्विषतो वधोऽसि ॥२८॥
॥१०॥ प्रत्युष्टꣳ रक्षः प्रत्युष्टाऽअरातयो निष्टप्तꣳ रक्षो निष्टप्ताऽअरातयः ।
अनिशितोऽसि सपत्नक्षिद्वाजिनं त्वा वाजेध्यायै सम्मार्ज्मि । प्रत्युष्टꣳ रक्षः
प्रत्युष्टाऽअरातयो निष्टप्तꣳ रक्षो निष्टप्ताऽअरातयः । अनिशितासि सपत्न-
क्षिद्वाजिनीं त्वा वाजेध्यायै सम्मार्ज्मि ॥२९॥
अदित्यै रास्नासि विष्णोर्वेष्पोऽस्यूर्जे त्वादब्धेन त्वा चक्षुषावपश्यामि ।
अग्नेर्जिह्वासि सुहूर्देवेभ्यो धाम्ने धाम्ने मे भव यजुषे यजुषे ॥३०॥
सवितुस्त्वा प्रसवऽउत्पुनाम्यच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः । सवितुर्वः
प्रसवऽउत्पुनाम्यच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः । तेजोऽसि शुक्रमस्यमृत-
मसि धाम नामासि प्रियं देवानामनाधृष्टं देवयजनमसि ॥३१॥

॥ इति प्रथमोऽध्यायः ॥

---

# अथ द्वितीयोऽध्यायः

**ऋषिः** (१) 'कृष्णोसि' इत्यारभ्य (१९) 'घृताची स्थ' इत्यन्तानाम्, (२०) 'अग्नेदब्धायो' इत्यारभ्य (२८) 'अग्ने व्रतपते' इत्यन्तानाञ्च सामान्यतः प्राजापत्यः परमेष्ठी प्राजापत्या देवा वा ऋषयः । विशेषतश्च—

(४) 'वीतिहोत्रम्' इत्यस्य विश्वावसुः ।

(११) 'देवस्य त्वा' इत्यारभ्य (१३) 'मनोजूतिः' इत्यन्तानामाङ्गिरसो बृहस्पतिः ।

(१६) 'मरुताम्पृषतीः' 'चक्षुष्पा अग्ने' इत्यनयोः कपिः ।

(१७) 'यम्परिधिम्' 'अग्नेः प्रियम्' इत्यनयोर्देवलः ।

(१८) 'सꣳस्रवभागा' 'स्वाहा वाट्' इत्यनयोः सोमशुष्मः ।

(१९) 'यज्ञ नमश्च' इत्यस्य शूर्पम्, यवमान्, ऋषिः, उद्वालवान्, धानान्तर्वांश्च ।

(२१) 'देवा गातु' इत्यस्य मनसस्पतिः ।

(२९) 'अग्नये कव्यवाहनाय' इत्यारभ्य (३४) 'ऊर्जं वहन्तीः' इत्यन्तानां प्रजापतिः ॥

**देवता** (१) 'कृष्णोऽसि' इत्यस्येध्मः, 'वेदिरसि' इत्यस्य वेदिः, 'बर्हिरसि' इत्यस्य बर्हिः ।

(२) 'अदित्यै व्युन्दनम्' इत्यस्यापः, 'विष्णो स्तुपः' इत्यस्य प्रस्तरः, 'ऊर्णम्रदसम्' इत्यस्य वेदिः, 'भुवपतये' 'भुवनपतये' 'भूतानाम्पतये' इत्येषामग्निः ।

(३) 'गन्धर्वस्त्वा' 'इन्द्रस्य बाहुः' 'मित्रावरुणौ' इत्येषां परिधयः ।

(४) 'वीतिहोत्रम्' इत्यस्याग्निः ।

(५) 'समिदसि' इत्यस्याग्निः, 'सूर्यस्त्वा' इत्यस्याहवनीयाग्निः, 'सवितुर्बाहू' इत्यस्य विधृतिः, 'ऊर्णम्रदसम्' 'आ त्वा' इत्यनयोः प्रस्तरः ।

(६) 'घृताच्यसि जुहूः' 'घृताच्यस्युपभृत्' 'घृताच्यसि ध्रुवा' इत्येषां क्रमेण जुहूः, उपभृत्, ध्रुवाः, 'प्रियेण धाम्ना' इत्यस्य हविः, 'ध्रुवा असदन्' 'पाहि माम्' इत्यनयोर्विष्णुः ।

(७) 'अग्ने वाजजित्' इत्यस्याग्निः, 'नमो देवेभ्यः' इत्यस्य देवाः, 'स्वधा पितृभ्यः' इत्यस्य पितरः, 'सुयमे मे' इत्यस्य स्रुचौ ।

(८) 'अङ्घ्रिणा विष्णो' इत्यस्य विष्णुः, 'वसुमतीमग्ने' इत्यस्याग्निः, 'इत इन्द्रः' इत्यस्येन्द्रः ।

(९) 'सञ्ज्योतिषा' इत्यस्याज्यम् ।

(१०) 'मयीदम्' इत्यस्येन्द्रो मघवा, 'उपहूता पृथिवी' इत्यस्य पृथिवी ।

(११) 'उपहूतो द्यौः' इत्यस्य द्यौः, 'देवस्य त्वा' इत्यस्य सविता, 'प्रतिगृह्णामि' 'अग्नेष्ट्वा' इत्यनयोः प्राशित्रम् ।

(१२–१३) 'एतन्ते' इत्यस्य विश्वे देवाः ।

(१४) 'एषा ते' 'अग्ने वाजजित्' इत्यनयोरग्निः ।

(१५) 'अग्नीषोमयोः' 'अग्नीषोमौ' इत्यनयोरग्नीषोमौ, 'इन्द्राग्न्योः' 'इन्द्राग्नी' इत्यनयोरिन्द्राग्नी ।

(१६) 'वसुभ्यस्त्वा' 'रुद्रेभ्यस्त्वा' 'आदित्येभ्यस्त्वा' इत्येषां परिधयः, 'सञ्जानाथाम्' 'व्यन्तु वयोक्तम्' 'मरुताम्पृषतीः' इत्येषां प्रस्तरः, 'चक्षुष्पा अग्ने' इत्यस्याग्निः ।

(१७) 'यम्परिधिम्' 'अग्नेः प्रियम्' इत्यनयोरग्निः ।

(१८) 'सꣳस्रवभागा' इत्यस्य विश्वे देवाः ।

(१९) 'घृताची स्थः' इत्यस्य स्रुचौ, 'यज्ञ नमश्च' इत्यस्य यज्ञः ।

(२०) 'अग्नेदब्धायो' इत्यस्य गार्हपत्योऽग्निः, 'अग्नये संवेशपतये' इत्यस्य दक्षिणाग्निः, 'सरस्वत्यै' इत्यस्य सरस्वती ।

(२१) 'वेदोसि' इत्यस्य वेदः, 'देवा गातुविदः' इत्यस्य वातः ।

(२२) 'सम्बर्हिरङ्क्ताम्' इत्यस्य बर्हिः ।

(२३) 'कस्त्वा' इत्यस्य प्रजापतिः, 'रक्षसां भागः' इत्यस्य रक्षांसि ।

(२४) 'सं वर्चसा' इत्यस्य त्वष्टा ।

(२५) 'दिवि विष्णुः' 'अन्तरिक्षे विष्णुः' 'पृथिव्यां विष्णुः' इत्येषां विष्णुः, 'अस्मादन्नात्' इत्यस्य भागः, 'अस्यै प्रतिष्ठायाः' इत्यस्य भूमिः, 'अगन्म स्वः' इत्यस्य देवाः, 'सञ्ज्योतिषा' इत्यस्याहवनीयः ।

(२६) 'स्वयम्भूरसि' 'सूर्यस्यावृतम्' इत्यनयोः सूर्यः ।

(२७) 'अग्ने गृहपते' इत्यस्य गार्हपत्यः, 'सूर्यस्यावृतम्' इत्यस्य सूर्यः ।

(२८) 'अग्ने व्रतपते' 'इदमहम्' इत्यनयोरग्निः ।

(२९) 'अग्नये कव्यवाहनाय' 'सोमाय पितृमते' इत्यनयोर्देवाः, 'अपहता असुराः' इत्यस्यासुराः ।

(३०) 'ये रूपाणि' इत्यस्य कव्यवाहनोऽग्निः ।
(३१) 'अत्र पितरः' 'अमी मदन्त' इत्यनयोः पितरः ।
(३२) 'नमो वः पितरो रसाय' इत्यस्य रसः, 'नमो वः पितरः शोषाय' इत्यस्य शोषः, 'नमो वः पितरो जीवाय' इत्यस्य जीवः, 'नमो वः पितरः स्वधायै' इत्यस्य स्वधा, 'नमो वः पितरो घोराय' इत्यस्य घोरः, 'नमो वः पितरो मन्यवे' इत्यस्य मन्युः, 'गृहान्नः' 'एतद्वः' इत्यनयोः पितरः ।
(३३) 'आधत्त पितरः' इत्यस्य पितरः ।
(३४) 'ऊर्जं वहन्तीः' इत्यस्यापः ॥

छन्दः (४) 'वीतिहोत्रन्त्वा' इत्यस्य गायत्री, (१४) 'एषा ते अग्ने' इत्यस्यानुष्टुप्, (१६) 'मरुताम्पृषतीः' 'चक्षुष्पा अग्ने' इत्यनयोर्बृहती, (१७) 'यम्परिधिम्' इत्यस्य विराड्रूपा त्रिष्टुप्, 'अग्नेः प्रियम्' इति यजुः, (१८) 'सꣳस्रवभागा' इत्यस्य त्रिष्टुप्, 'स्वाहा वाट्' इति यजुः, (२१) 'देवा गातुविदः' इत्यस्य विराट्, (२२) 'सम्बर्हिरङ्क्ताम्' इत्यस्य विराड्रूपा त्रिष्टुप्, (२४) 'सं वर्चसा' (३०) 'ये रूपाणि' इत्यनयोस्त्रिष्टुप्, (३३) 'आधत्त पितरः' इत्यस्य गायत्री, (३४) 'ऊर्जं वहन्तीः' इत्यस्य विराट् ॥

॥ हरिःॐ ॥

॥१॥ कृष्णोऽस्याखरेष्ठोऽग्नये त्वा जुष्टम्प्रोक्षामि वेदिरसि बर्हिषे त्वा जुष्टाम्प्रोक्षामि
बर्हिरसि स्रुग्भ्यस्त्वा जुष्टम्प्रोक्षाम्यदित्यै व्युन्दनम् ॥१॥
अदित्यै व्युन्दनमसि विष्णोः स्तुपोऽस्यूर्णम्म्रदसन्त्वा स्तृणामि स्वासस्थान्देवेभ्यो
भुवपतये स्वाहा भुवनपतये स्वाहा भूतानाम्पतये स्वाहा ॥२॥
गन्धर्वस्त्वा विश्वावसुः परिदधातु विश्वस्यारिष्ट्यै यजमानस्य परिधिरस्यग्निरिड
ऽईडितः । इन्द्रस्य बाहुरसि दक्षिणो विश्वस्यारिष्ट्यै यजमानस्य परिधिरस्य-
ग्निरिडऽईडितः । मित्रावरुणौ त्वोत्तरतः परिधत्तान्ध्रुवेण धर्म्मणा विश्वस्यारिष्ट्यै
यजमानस्य परिधिरस्यग्निरिडऽईडितः ॥३॥
वीतिहोत्रन्त्वा कवे द्युमन्तꣳ समिधीमहि । अग्ने बृहन्तमध्वरे ॥४॥
समिदसि सूर्य्यस्त्वा पुरस्तात्पातु कस्याश्चिदभिशस्त्यै । सवितुर्बाहू स्थऽऊर्णम्म्रद-
सन्त्वा स्तृणामि स्वासस्थन्देवेभ्यऽआ त्वा वसवो रुद्राऽआदित्याः सदन्तु ॥५॥
घृताच्यसि जुहूर्नाम्ना सेदम्प्रियेण धाम्ना प्प्रियꣳ सदऽआसीद घृताच्यस्युपभृ-
न्नाम्ना सेदम्प्रियेण धाम्ना प्प्रियꣳ सदऽआसीद घृताच्यसि ध्रुवा नाम्ना सेदम्प्रियेण
धाम्ना प्प्रियꣳ सदऽआसीद प्प्रियेण धाम्ना प्प्रियꣳ सदऽआसीद । ध्रुवाऽअसद-
न्नृतस्य योनौ ता विष्णो पाहि पाहि यज्ञम्पाहि यज्ञपतिम्पाहि माँय्यज्ञ-
न्यम् ॥६॥
॥२॥ अग्ने वाजजिद्वाजन्त्वा सरिष्यन्तँवाजजितꣳ सम्मार्ज्मि । नमो देवेभ्यः स्वधा
पितृभ्यः सुयमे मे भूयास्तमस्कन्नमद्य ॥७॥
अस्कन्नमद्य देवेभ्यऽआज्यꣳ सम्भ्रियासमङ्घ्रिणा विष्णो मा त्वावक्रमिषँवसु-
मतीमग्ने ते च्छायामुपस्थेषँविष्णो स्थानमसीतऽइन्द्रो वीर्य्यमकृणोदूर्ध्वोऽध्वरऽआ-
स्थात् ॥८॥
अग्ने वेर्होत्रँवेर्दूत्यमवतान्त्वान्द्यावापृथिवीऽअव त्वन्द्यावापृथिवी स्विष्टकृद्देवेभ्यऽ
इन्द्रऽआज्येन हविषा भूत्स्वाहा सञ्ज्योतिषा ज्योतिः ॥९॥
॥३॥ मयीदमिन्द्रऽइन्द्रियन्दधात्वस्म्मान्रायो मघवानः सचन्ताम् । अस्म्माकꣳ सन्त्वा-
शिषः सत्त्या नः सन्त्वाशिषऽउपहूता पृथिवी मातोप माम्पृथिवी माता ह्वयता-
मग्निराग्नीध्रात्स्वाहा ॥१०॥
उपहूतो द्यौष्पितोप मान्द्यौष्पिता ह्वयतामग्निराग्नीध्रात्स्वाहा ।
देवस्य त्वा सवितुः प्प्रसवेऽश्विनोर्बाहुभ्याम्पूष्णो हस्ताभ्याम् ।
प्रतिगृह्णाम्म्यग्नेष्ट्वास्येन प्प्राश्नामि ॥११॥
एतन्ते देव सवितर्य्यज्ञम्प्राहुर्बृहस्पतये ब्रह्मणे ।
तेन यज्ञमव तेन यज्ञपतिन्तेन मामव ॥१२॥
मनो जूतिर्ज्जुषतामाज्यस्य बृहस्पतिर्य्यज्ञमिमन्तनोत्वरिष्टँय्यज्ञꣳ समिमन्दधातु ।
विश्वे देवासऽइह मादयन्तामो३म्प्रतिष्ठ ॥१३॥
एषा तेऽअग्ने समित्तया वर्द्धस्व चा च प्प्यायस्व । वर्द्धिषीमहि च वयमा च प्प्यासि-
षीमहि । अग्ने वाजजिद्वाजन्त्वा ससृवाꣳसँवाजजितꣳ सम्मार्ज्मि ॥१४॥
॥४॥ अग्नीषोमयोरुज्जितिमनूज्जेषँवाजस्य मा प्प्रसवेन प्प्रोहामि । अग्नीषोमौ तमपनुदताँ-
य्योऽस्म्मान्द्वेष्टि यञ्च वयन्द्विष्म्मो वाजस्यैनम्प्रसवेनापोहामि । इन्द्राग्न्योरुज्जितिम-
नूज्जेषँवाजस्य मा प्प्रसवेन प्प्रोहामि । इन्द्राग्नी तमपनुदताँय्योऽस्म्मान्द्वेष्टि यञ्च
वयन्द्विष्म्मो वाजस्यैनम्प्रसवेनापोहामि ॥१५॥
वसुभ्यस्त्वा रुद्रेभ्यस्त्वादित्येभ्यस्त्वा सञ्जानाथान्द्यावापृथिवी मित्रावरुणौ त्वा
वृष्ट्यावताम् । व्यन्तु वयोक्तꣳ रिहाणा मरुताम्पृषतीर्ग्गच्छ वशा पृश्निर्भूत्वा
दिवङ्गच्छ ततो नो वृष्टिमावह । चक्षुष्पाऽअग्नेऽसि चक्षुर्म्मे पाहि ॥१६॥
यम्परिधिम्पर्य्यधत्थाऽअग्ने देव पणिभिर्ग्गुह्यमानः ।
तन्तऽएतमनु जोषम्भराम्म्येष नेत्त्वदपचेतयाताऽअग्नेः प्प्रियम्पाथोऽपीतम् ॥१७॥
सꣳस्रवभागा स्थेषा बृहन्तः प्प्रस्तरेष्ठाः परिधेयाश्च देवाः ।
इमाँवाचमभि विश्वे गृणन्तऽआसद्यास्मिन्बर्हिषि मादयध्वꣳ स्वाहा वाट् ॥१८॥

घृताची स्थो धुर्य्यौ पातꣳ सुम्ने स्थः सुम्ने मा धत्तम् ।
यज्ञ नमश्च तऽउप च यज्ञस्य शिवे सन्तिष्ठस्व स्विष्टे मे सन्तिष्ठस्व ॥१९॥

॥५॥ अग्नेऽदब्धायोऽशीतम पाहि मा दिद्योः पाहि प्रसित्यै पाहि दुर-
द्मन्याऽअविषन्नः पितुङ्कृणु सुषदा योनौ स्वाहा वाडग्नये संवेशपतये स्वाहा सरस्वत्यै
यशोभगिन्यै स्वाहा ॥२०॥
वेदोऽसि येन त्वन्देव वेद देवेभ्यो वेदोऽभवस्तेन मह्यं वेदो भूयाः । देवा गातुविदो
गातुं वित्त्वा गातुमित । मनसस्पतऽइमन्देव यज्ञꣳ स्वाहा वाते धाः ॥२१॥
सम्बर्हिरङ्क्ताꣳ हविषा घृतेन समादित्यैर्वसुभिः सम्मरुद्भिः ।
समिन्द्रो विश्वेदेवेभिरङ्क्तान्दिव्यन्नभो गच्छतु यत्स्वाहा ॥२२॥
कस्त्वा विमुञ्चति स त्वा विमुञ्चति कस्मै त्वा विमुञ्चति तस्मै त्वा विमुञ्चति ।
पोषाय रक्षसाम्भागोऽसि ॥२३॥

॥६॥ सं वर्चसा पयसा सन्तनूभिरगन्महि मनसा सꣳ शिवेन ।
त्वष्टा सुदत्रो विदधातु रायोऽनुमार्ष्टु तन्वो यद्विलिष्टम् ॥२४॥
दिवि विष्णुर्व्यक्रꣳस्त जागतेन च्छन्दसा ततो निर्भक्तो योऽस्मान्द्वेष्टि यञ्च
वयन्द्विष्मोऽन्तरिक्षे विष्णुर्व्यक्रꣳस्त त्रैष्टुभेन च्छन्दसा ततो निर्भक्तो
योऽस्मान्द्वेष्टि यञ्च वयन्द्विष्मः पृथिव्यां विष्णुर्व्यक्रꣳस्त गायत्रेण च्छन्दसा
ततो निर्भक्तो योऽस्मान्द्वेष्टि यञ्च वयन्द्विष्मोऽस्मादन्नादस्यै प्रतिष्ठायाऽअगन्म
स्वः सञ्ज्योतिषाभूम ॥२५॥
स्वयम्भूरसि श्रेष्ठो रश्मिर्वर्चोदाऽअसि वर्चो मे देहि ।
सूर्यस्यावृतमन्वावर्त्ते ॥२६॥
अग्ने गृहपते सुगृहपतिस्त्वयाऽग्नेऽहङ्गृहपतिना भूयासꣳ सुगृहपतिस्त्वम्मयाऽग्ने
गृहपतिना भूयाः । अस्थूरि णौ गार्हपत्यानि सन्तु शतꣳ हिमाः सूर्यस्यावृत-
मन्वावर्त्ते ॥२७॥
अग्ने व्रतपते व्रतमचारिषन्तदशकन्तन्मेऽराधीदमहं यऽएवास्मि सोऽस्मि ॥२८॥

॥७॥ अग्नये कव्यवाहनाय स्वाहा सोमाय पितृमते स्वाहा ।
अपहताऽअसुरा रक्षाꣳसि वेदिषदः ॥२९॥
ये रूपाणि प्रतिमुञ्चमानाऽअसुराः सन्तः स्वधया चरन्ति ।
परापुरो निपुरो ये भरन्त्यग्निष्टाँल्लोकात्प्रणुदात्यस्मात् ॥३०॥
अत्र पितरो मादयध्वं यथाभागमावृषायध्वम् ।
अमीमदन्त पितरो यथाभागमावृषायिषत ॥३१॥
नमो वः पितरो रसाय नमो वः पितरः शोषाय नमो वः पितरो जीवाय नमो वः
पितरः स्वधायै नमो वः पितरो घोराय नमो वः पितरो मन्यवे नमो वः पितरः
पितरो नमो वो गृहान्नः पितरो दत्त सतो वः पितरो देष्मैतद्वः पितरो वासऽ
आधत्त ॥३२॥
आधत्त पितरो गर्भङ्कुमारम्पुष्करस्रजम् । यथेह पुरुषोऽसत् ॥३३॥
ऊर्जं वहन्तीरमृतङ्घृतम्पयः कीलालम्परिस्रुतम् । स्वधा स्थ तर्पयत मे पितॄन् ॥३४॥

॥ इति द्वितीयोऽध्यायः ॥

# अथ तृतीयोऽध्यायः

ऋषिः(१) 'समिधाग्निम्' इत्यारभ्य (८) 'त्रिꣳशद्धाम' इत्यन्तानां सामान्यतः प्रजापतिः, देवाः, अग्निः, गन्धर्वा वा ऋषयः । विशेषतश्च—(१) 'समिधाग्निम्' इत्यस्याङ्गिरसो विरूपः, (२) 'सुसमिद्धाय' इत्यस्य वसुश्रुतः, (३) 'तन्त्वा' इत्यस्य भरद्वाजः, (६) 'आयङ्गौः' (७) 'अन्तश्चरसि' (८) 'त्रिꣳशद्धाम' इत्येषां सर्पराज्ञी कद्रूः ।

(९) 'अग्निर्ज्योतिः' इत्यारभ्य (१०) 'सजूर्देवेन' इत्यन्तानां प्रजापतिस्तत्रापि (९) 'अग्निर्वर्चः' 'सूर्यो वर्चः' इत्यनयोस्तक्षा, 'ज्योतिः सूर्यः' इत्यस्य चैलकिर्जीविलः ।

(११) 'उपप्रयन्त' इत्यारभ्य (३६) 'परि ते' इत्यन्तानां देवाः । तत्रापि—(११) 'उपप्रयन्त' इत्यस्य गोतमो राहूगणः, (१२) 'अग्निर्मूर्धा' इत्यस्य विरूपः, (१३) 'उभा वाम्' इत्यस्य भरद्वाजः, (१४) 'अयन्ते' इत्यस्य भारतौ देवश्रवोदेववातौ, (१५) 'अयमिह' इत्यस्य वामदेवः, (१६) 'अस्य प्रत्नाम्' इत्यस्यावत्सारः, (१८) 'चित्रावसो' इत्यस्य ऋषयः, (२२) 'उप त्वा' (२३) 'राजन्तमध्वराणाम्' (२४) 'स नः' इत्येषां वैश्वामित्रो मधुच्छन्दाः, (२५) 'अग्ने त्वम्' इत्यस्य बन्धुः, 'वसुरग्निः' इत्यस्य सुबन्धुः, (२६) 'तन्त्वा' इत्यस्य श्रुतबन्धुः, 'स नः' इत्यस्य विप्रबन्धुः, (२८) 'सोमानꣳ स्वरणम्' (२९) 'यो रेवान्' (३०) 'मा नः' इत्येषां ब्रह्मणस्पतिर्मेधातिथिर्वा, (३१) 'महि त्रीणाम्' (३२) 'नहि तेषाम्' (३३) 'ते हि' इत्येषां सत्यधृतिर्वारुणिः, (३४) 'कदा चन' इत्यस्य मधुच्छन्दाः, (३५) 'तत्सवितुः' इत्यस्य विश्वामित्रः, (३६) 'परि ते' इत्यस्य वामदेवः ।

(३७) 'भूर्भुवः' इत्यस्यासुरिः, 'नर्य प्रजाम्' इत्यारभ्य (४०) 'अयमग्निः पुरीष्यः' इत्यन्तानामादित्यः ।

(४१) 'गृहा मा' (४२) 'येषामध्येति' (४३) 'उपहूता इह' इत्येषां बार्हस्पत्यः शंयुः ।

(४४) 'प्रघासिनः' इत्यारभ्य (६३) 'निवर्तयामि' इत्यन्तानां प्रजापतिस्तत्रापि (४६) 'मो षू णः' इत्यस्यागस्त्यः, (४९) 'पूर्णा दर्वि' (५०) 'देहि मे' इत्यनयोरौर्णवाभः, (५१) 'अक्षन्नमीमदन्त' (५२) 'सुसन्दृशन्त्वा' इत्यनयोर्गोतमः, (५३) 'मनो नु' (५४) 'आ न एतु' (५५) 'पुनर्नः' (५६) 'वयꣳ सोम' इत्येषां बन्धुः, (६०) 'त्र्यम्बकम्० पुष्टिवर्धनम्' इत्यस्य वसिष्ठः, (६२) 'त्र्यायुषम्' इत्यस्य नारायणः ॥

देवता(१) 'समिधाग्निम्' (२) 'सुसमिद्धाय' (३) 'तन्त्वा' (४) 'उप त्वा' इत्येषामग्निः, (५) 'भूर्भुवः स्वः' इत्येषां क्रमेणाग्निवायुसूर्याः, 'द्यौरिव' इत्यस्य लिङ्गोक्ता ।

(६) 'आयङ्गौः' (७) 'अन्तश्चरति' (८) 'त्रिꣳशद्धाम' इत्येषामग्निः ।

(९) 'अग्निर्ज्योतिः' 'सूर्यो ज्योतिः' 'अग्निर्वर्चः' 'सूर्यो वर्चः' 'ज्योतिः सूर्यः' (१०) 'सजूर्देवेन सवित्रा सजू रात्र्या' 'सजूर्देवेन सवित्रा सजूरुषसा' इत्येषां लिङ्गोक्ताः ।

(११) 'उपप्रयन्तः' (१२) 'अग्निर्मूर्धा' इत्यनयोरग्निः ।
(१३) 'उभा वाम्' इत्यस्येन्द्राग्नी ।
(१४) 'अयन्ते' (१५) 'अयमिह' इत्यनयोरग्निः ।
(१६) 'अस्य प्रत्नाम्' इत्यस्य गौरग्निः पयो वा ।
(१७) 'तनूपा अग्ने' 'आयुर्दा अग्ने' 'वर्चोदा अग्ने' 'अग्ने यन्मे' (१८) 'इन्धानास्त्वा' इत्येषामग्निः, 'चित्रावसो' इत्यस्य रात्रिः ।
(१९) 'सन्त्वमग्ने' इत्यस्याग्निः ।
(२०) 'अन्ध स्थ' (२१) 'रेवती रमध्वम्' (२२) 'सꣳहितासि' इत्येषां गौः ।
(२२) 'उप त्वाग्ने' (२३) 'राजन्तमध्वराणाम्' (२४) 'स नः' (२५) 'अग्ने त्वम्' 'वसुरग्निः' (२६) 'तन्त्वा' 'स नो बोधि' इत्येषामग्निः ।
(२७) 'इड एहि' 'काम्या एत' इत्यनयोर्गौः ।
(२८) 'सोमानꣳ स्वरणम्' (२९) 'यो रेवान्' (३०) 'मा नः' इत्येषां ब्रह्मणस्पतिः ।
(३१) 'महि त्रीणाम्' (३२) 'नहि तेषाम्' (३३) 'ते हि' इत्येषामादित्यः ।
(३४) 'कदा चन' इत्यस्येन्द्रः ।
(३५) 'तत्सवितुः' इत्यस्य सविता ।
(३६) 'परि ते' इत्यस्याग्निः, (३७) 'भूर्भुवः स्वः' इत्यस्य गार्हपत्याहवनीयावग्नी, 'नर्य प्रजाम्' इत्यस्य गार्हपत्यः, 'शꣳस्य पशून्' इत्यस्याहवनीयः, 'अथर्य पितुम्' इत्यस्य दक्षिणाग्निः ।
(३८) 'आ गन्म' इत्यस्याहवनीयः ।
(३९) 'अयमग्निर्गृहपतिः' इत्यस्य गार्हपत्यः ।
(४०) 'अयमग्निः पुरीष्यः' इत्यस्यान्वाहार्यपचनः ।
(४१) 'गृहा मा' (४२) 'येषामध्येति' (४३) 'उपहूता इह' इत्येषां वास्तुः ।
(४४) 'प्रघासिनः' (४५) 'यद्ग्रामे' इत्यनयोर्मरुतः ।
(४६) 'मो षू णः' इत्यस्येन्द्रो मरुतश्च ।
(४७) 'अक्रन् कर्म' इत्यस्याग्निः ।
(४८) 'अवभृथ निचुम्पुण' इत्यस्य यज्ञः ।
(४९) 'पूर्णा दर्वि' (५०) 'देहि मे' (५१) 'अक्षन्नमीमदन्त' (५२) 'सुसन्दृशन्त्वा' इत्येषामिन्द्रः ।
(५३) 'मनो नु' (५४) 'आ न एतु' (५५) 'पुनर्नः' इत्येषां मनः ।
(५६) 'वयꣳ सोम' इत्यस्य सोमः ।
(५७) 'एष ते० स्वाहा' 'एष ते० पशुः' (५८) 'अव रुद्रम्' (५९) 'भेषजमसि' (६०) 'त्र्यम्बकं० पुष्टिवर्धनम्' 'त्र्यम्बकं० पतिवेदनम्' (६१) 'एतत्ते' इत्येषां रुद्रः ।
(६२) 'त्र्यायुषञ्जमदग्नेः' इत्यस्य यजमानाशीः ।
(६३) 'शिवो नामासि' इत्यस्य क्षुरः, 'निवर्तयामि' इत्यस्य लिङ्गोक्ता ॥

छन्दः(१) 'समिधाग्निम्' इत्यादिचतुर्णाम्, (६) 'आयङ्गौः' इत्यादित्रयाणाम्, (९) 'अग्निर्ज्योतिः' इत्यादिनवानाञ्च गायत्री, (१३) 'उभा वाम्' इत्यस्य त्रिष्टुप्, (१४) 'अयन्ते' इत्यस्यानुष्टुप्, (१५) 'अयमिह' इत्यस्य जगती, (१६) 'अस्य प्रत्नाम्' इत्यस्य गायत्री, (१८) 'इन्धानास्त्वा' इत्यस्य महापङ्क्तिः, (२२) 'उप त्वाग्ने' इत्यादित्रयाणां गायत्री, (२५) 'अग्ने त्वम्' इत्यादिचतुर्णां द्विपदा विराट्, (२८) 'सोमानम्' इत्यादिषण्णां गायत्री, (३४) 'कदा चन' इत्यस्य पथ्याबृहती, (३५) 'तत्सवितुः' (३६) 'परि ते' इत्यनयोर्गायत्री, (३८) 'आगन्म' इत्यस्यानुष्टुप्, (३९) 'अयमग्निर्गृहपतिः' इत्यस्य न्यङ्कुसारिणी बृहती, (४०) 'अयमग्निः पुरीष्यः' इत्यस्यानुष्टुप्, (४१) 'गृहा मा' इत्यस्य विराड्रूपा त्रिष्टुप्, (४२) 'येषामध्येति' इत्यस्यानुष्टुप्, (४३) 'उपहूता इह' इत्यस्य महापङ्क्तिः, (४४) 'प्रघासिनो हवामहे' इत्यस्य गायत्री, (४५) 'यद्ग्रामे' इत्यस्यानुष्टुप्, (४६) 'मो षू णः' इत्यस्य विराट्, (४७) 'अक्रन्कर्म' इत्यस्यानुष्टुप्, (४८) 'अवभृथ निचुम्पुण' इत्यादित्रयाणामनुष्टुप्, (५१) 'अक्षन्नमीमदन्त' 'सुसन्दृशन्त्वा' इत्यनयोः पङ्क्तिः, (५३) 'मनो नु' इत्यादिचतुर्णां गायत्री, (५८) 'अव रुद्रम्' इत्यस्य पङ्क्तिः, (५९) 'भेषजमसि' इत्यस्य ककुप्, (६०) 'त्र्यम्बकं यजामहे' इत्यादिद्वयोरनुष्टुप्, (६१) 'एतत्ते' इत्यस्यास्तारपङ्क्तिः, (६२) 'त्र्यायुषञ्जमदग्नेः' इत्यादित्रयाणामुष्णिक् ॥

॥ हरिः ॐ ॥

॥१॥ समिधाग्निन्दुवस्यत घृतैर्बोधयतातिथिम् । आस्मिन्हव्या जुहोतन ॥१॥
सुसमिद्धाय शोचिषे घृतन्तीव्रञ्जुहोतन । अग्नये जातवेदसे ॥२॥
तन्त्वा समिद्भिरङ्गिरो घृतेन वर्द्धयामसि । बृहच्छोचा यविष्ठ्य ॥३॥
उप त्वाग्ने हविष्मतीर्घृताचीर्यन्तु हर्य्यत । जुषस्व समिधो मम ॥४॥
॥२॥ भूर्भुवः स्वर्द्यौरिव भूम्ना पृथिवीव वरिम्णा ।
तस्यास्ते पृथिवि देवयजनि पृष्ठेऽग्निमन्नादमन्नाद्यायादधे ॥५॥
आयङ्गौः पृश्निरक्रमीदसदन्मातरम्पुरः । पितरञ्च प्रयन्त्स्वः ॥६॥
अन्तश्चरति रोचनास्य प्राणादपानती । व्यख्यन्महिषो दिवम् ॥७॥
त्रिꣳशद्धाम विराजति वाक्पतङ्गाय धीयते । प्रतिवस्तोरह द्युभिः ॥८॥
॥३॥ अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहा ।
अग्निर्वर्चो ज्योतिर्वर्चः स्वाहा सूर्यो वर्चो ज्योतिर्वर्चः स्वाहा ।
ज्योतिः सूर्यः सूर्यो ज्योतिः स्वाहा ॥९॥
सजूर्देवेन सवित्रा सजू रात्र्येन्द्रवत्या । जुषाणोऽअग्निर्वेतु स्वाहा ।
सजूर्देवेन सवित्रा सजूरुषसेन्द्रवत्या । जुषाणः सूर्यो वेतु स्वाहा ॥१०॥
॥४॥ उपप्रयन्तोऽअध्वरम्मन्त्रं वोचेमाग्नये । आरेऽअस्मे च शृण्वते ॥११॥
अग्निर्मूर्द्धा दिवः ककुत्पतिः पृथिव्याऽअयम् ।
अपाꣳ रेताꣳसि जिन्वति ॥१२॥
उभा वामिन्द्राग्नीऽआहुवध्याऽउभा राधसः सह मादयध्यै ।
उभा दातारविषाꣳ रयीणामुभा वाजस्य सातये हुवे वाम् ॥१३॥
अयन्ते योनिरृत्वियो यतो जातोऽअरोचथाः ।
तञ्जानन्नग्नऽआरोहाथा नो वर्द्धया रयिम् ॥१४॥
अयमिह प्रथमो धायि धातृभिर्होता यजिष्ठोऽअध्वरेष्वीड्यः ।
यमप्नवानो भृगवो विरुरुचुर्वनेषु चित्रं विभ्वं विशेविशे ॥१५॥

अस्य प्रत्नामनु द्युतꣳ शुक्रन्दुदुह्रेऽअह्रयः । पयः सहस्रसामृषिम् ॥१६॥
तनूपाऽअग्नेसि तन्वम्मे पाह्यायुर्दाऽअग्नेस्यायुर्म्मे देहि वर्च्चोदाऽअग्नेसि वर्च्चो मे
देहि । अग्ने यन्मे तन्वाऽऊनन्तन्मऽआपृण ॥१७॥
इन्धानास्त्वा शतꣳ हिमा द्युमन्तꣳ समिधीमहि । वयस्वन्तो वयस्कृतꣳ सहस्वन्तः
सहस्कृतम् । अग्ने सपत्नदम्भनमदब्धासोऽअदाभ्यम् । चित्रावसो स्वस्ति ते
पारमशीय ॥१८॥
सन्त्वमग्ने सूर्य्यस्य वर्च्चसागथाः समृषीणाꣳस्तुतेन । सम्प्रियेण धाम्ना समह-
मायुषा सँवर्च्चसा सम्प्रजया सꣳ रायस्पोषेण ग्मिषीय ॥१९॥
अन्ध स्थान्धो वो भक्षीय मह स्थ महो वो भक्षीयोर्ज्ज स्थोर्जँवो भक्षीय
रायस्पोष स्थ रायस्पोषँवो भक्षीय ॥२०॥
रेवती रमध्वमस्मिन्योनावस्मिन्गोष्ठेस्मिँल्लोकेस्मिन्क्षये ।
इहैव स्त मापगात ॥२१॥
सꣳहितासि विश्वरूप्यूर्जा माविश गौपत्येन । उप त्वाग्ने दिवेदिवे दोषावस्त-
र्द्धिया वयम् । नमो भरन्तऽएमसि ॥२२॥
राजन्तमध्वराणाङ्गोपामृतस्य दीदिविम् । वर्द्धमानꣳ स्वे दमे ॥२३॥
स नः पितेव सूनवेग्ने सूपायनो भव । सचस्वा नः स्वस्तये ॥२४॥
अग्ने त्वन्नोऽअन्तमऽउत त्राता शिवो भवा वरूथ्यः ।
वसुरग्निर्वसुश्रवाऽअच्छा नक्षि द्युमत्तमꣳ रयिन्दाः ॥२५॥
तन्त्वा शोचिष्ठ दीदिवः सुम्नाय नूनमीमहे सखिभ्यः ।
स नो बोधि श्रुधी हवमुरुष्या णोऽअघायतः समस्मात् ॥२६॥
इडऽएह्यदितऽएहि काम्म्याऽएत । मयि वः कामधरणम्भूयात् ॥२७॥
सोमानꣳ स्वरणङ्कृणुहि ब्रह्मणस्पते । कक्षीवन्तँय्यऽऔशिजः ॥२८॥
यो रेवान्योऽअमीवहा वसुवित्पुष्टिवर्द्धनः ।
स नः सिषक्तु यस्तुरः ॥२९॥
मा नः शꣳसोऽअररुषो धूर्त्तिः प्रणङ्मर्त्यस्य । रक्षा णो ब्रह्मणस्पते ॥३०॥
महि त्रीणामवोस्तु द्युक्षम्मित्रस्यार्य्यम्णः । दुराधर्षँवरुणस्य ॥३१॥
नहि तेषाममा चन नाध्वसु वारणेषु । ईशे रिपुरघशꣳसः ॥३२॥
ते हि पुत्रासोऽअदितेः प्रजीवसे मर्त्याय । ज्योतिर्य्यच्छन्त्यजस्रम् ॥३३॥
कदाचन स्तरीरसि नेन्द्र सश्चसि दाशुषे ।
उपोपेन्नु मघवन्भूयऽइन्नु ते दानन्देवस्य पृच्यते ॥३४॥
तत्सवितुर्वरेण्यम्भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् ॥३५॥
परि ते दूडभो रथोस्माँ२ऽअश्नोतु विश्वतः । येन रक्षसि दाशुषः ॥३६॥
॥५॥ भूर्भुवः स्वः सुप्रजाः प्रजाभिः स्याꣳ सुवीरो वीरैः सुपोषः पोषैः ।
नर्य्य प्रजाम्मे पाहि शꣳस्य पशून्मे पाह्यथर्य्य पितुम्मे पाहि ॥३७॥
आगन्म विश्ववेदसमस्मभ्यँवसुवित्तमम् ।
अग्ने सम्राडभि द्युम्नमभि सहऽआयच्छस्व ॥३८॥
अयमग्निर्गृहपतिर्गार्हपत्यः प्रजाया वसुवित्तमः ।
अग्ने गृहपतेभि द्युम्नमभि सहऽआयच्छस्व ॥३९॥
अयमग्निः पुरीष्यो रयिमान्पुष्टिवर्द्धनः ।
अग्ने पुरीष्याभि द्युम्नमभि सहऽआयच्छस्व ॥४०॥
॥६॥ गृहा मा बिभीत मा वेपध्वमूर्ज्जम्बिभ्रतऽएमसि । ऊर्ज्जम्बिभ्रद्वः सुमनाः सुमेधा
गृहानैमि मनसा मोदमानः ॥४१॥
येषामध्येति प्रवसन्येषु सौमनसो बहुः ।
गृहानुपह्वयामहे ते नो जानन्तु जानतः ॥४२॥
उपहूताऽइह गावऽउपहूताऽअजावयः । अथोऽअन्नस्य कीलालऽउपहूतो गृहेषु नः ।
क्षेमाय वः शान्त्यै प्रपद्ये शिवꣳ शग्मꣳ शँय्योः शँय्योः ॥४३॥
॥७॥ प्रघासिनो हवामहे मरुतश्च रिशादसः । करम्भेण सजोषसः ॥४४॥
यद्ग्रामे यदरण्ये यत्सभायाँय्यदिन्द्रिये ।
यदेनश्चकृमा वयमिदन्तदवयजामहे स्वाहा ॥४५॥
मो षू णऽइन्द्रात्र पृत्सु देवैरस्ति हि ष्मा ते शुष्मिन्नवयाः ।
महश्चिद्यस्य मीढुषो यव्या हविष्मतो मरुतो वन्दते गीः ॥४६॥
अक्रन्कर्म्म कर्म्मकृतः सह वाचा मयोभुवा ।
देवेभ्यः कर्म्म कृत्वास्तम्प्रेत सचाभुवः ॥४७॥
अवभृथ निचुम्पुण निचेरुरसि निचुम्पुणः । अव देवैर्देवकृतमेनोयासिषमव मर्त्यै-
र्म्मर्त्यकृतम्पुरुराव्णो देव रिषस्पाहि ॥४८॥
॥८॥ पूर्ण्णा दर्वि परापत सुपूर्ण्णा पुनरापत । वस्नेव विक्रीणावहाऽइषमूर्ज्जꣳ शतक्रतो ॥४९॥

देहि मे ददामि ते नि मे धेहि नि ते दधे ।
निहारञ्च हरासि मे निहारन्निहराणि ते स्वाहा ॥५०॥

॥९॥ अक्षन्नमीमदन्त ह्यव प्प्रियाऽअधूषत । अस्तोषत स्वभानवो व्विप्प्रा नविष्ठया
मती योजा न्विन्द्र ते हरी ॥५१॥
सुसन्दृशन्त्वा व्वयम्मघवन्वन्दिषीमहि । प्र नूनम्पूर्णबन्धुर स्तुतो यासि व्वशाँ२ ॥ऽअनु
योजा न्विन्द्र ते हरी ॥५२॥
मनो न्वाह्वामहे नाराशꣳसेन स्तोमेन । पितॄणाञ्च मन्मभिः ॥५३॥
आ नऽएतु मनः पुनः क्रत्वे दक्षाय जीवसे ।
ज्योक्च सूर्यन्दृशे ॥५४॥
पुनर्न्नः पितरो मनो ददातु दैव्यो जनः । जीवँव्व्रातꣳ सचेमहि ॥५५॥
व्वयꣳ सोम व्व्रते तव मनस्तनूषु बिब्भ्रतः । प्रजावन्तः सचेमहि ॥५६॥

॥१०॥ एष ते रुद्र भागः सह स्वस्राम्बिकया तञ्जुषस्व
स्वाहैष ते रुद्र भागऽआखुस्ते पशुः ॥५७॥
अव रुद्रमदीमह्यव देवन्त्र्यम्बकम् । यथा नो व्वस्यसस्करद्यथा नः श्रेयसस्करद्यथा
नो व्व्यवसाययात् ॥५८॥
भेषजमसि भेषजङ्गवेऽश्वाय पुरुषाय भेषजम् । सुखम्मेषाय मेष्यै ॥५९॥
त्र्यम्बकँय्यजामहे सुगन्धिम्पुष्टिवर्द्धनम् ।
उर्व्वारुकमिव बन्धनान्मृत्योर्म्मुक्षीय मामृतात् ।
त्र्यम्बकँय्यजामहे सुगन्धिम्पतिवेदनम् ।
उर्व्वारुकमिव बन्धनादितो मुक्षीय मामुतः ॥६०॥
एतत्ते रुद्रावसन्तेन परो मूजवतोतीहि । अवततधन्वा पिनाकावसः कृत्तिवासा
ऽअहिꣳसन्नः शिवोतीहि ॥६१॥
त्र्यायुषञ्जमदग्नेः कश्यपस्य त्र्यायुषम् ।
यद्देवेषु त्र्यायुषन्तन्नोऽअस्तु त्र्यायुषम् ॥६२॥
शिवो नामासि स्वधितिस्ते पिता नमस्तेऽअस्तु मा मा हिꣳसीः । निवर्त्तयाम्म्यायुषे-
न्नाद्याय प्प्रजननाय रायस्प्पोषाय सुप्प्रजास्त्वाय सुवीर्य्याय ॥६३॥

॥ इति तृतीयोऽध्यायः ॥

# अथ चतुर्थोऽध्यायः

**ऋषिः**(१) 'एदमगन्म' इत्यारभ्य (३७) 'या ते' इत्यन्तानां सामान्यतः प्रजापतिर्ऋषिः । विशेषतश्च—(८) 'विश्वो देवस्य' इत्यस्य स्वस्त्यात्रेयः, (१०) 'ऊर्गस्याङ्गिः' इत्यस्याङ्गिरसः, (१६) 'त्वमग्ने' इत्यस्य वत्सः, (३५) 'नमो मित्रस्य' इत्यस्याभितपनः सूर्यः, (३७) 'या ते' इत्यस्य गोतमः ।

**देवता**(१) 'एदमगन्म' 'ऋक्सामाभ्याम्' इत्यनयोर्देवयजनम्, 'इमा आपः' इत्यस्यापः, 'ओषधे त्रायस्व' इत्यस्य कुशतरुणम्, 'स्वधिते मैनम्' इत्यस्य क्षुरः ।

(२) 'आपो अस्मान्' 'उदिदाभ्यः' इत्यनयोरापः, 'दीक्षातपसोः' इत्यस्य वासः ।

(३) 'महीनां पयः' इत्यस्य नवनीतम्, 'वृत्रस्यासि' इत्यस्याञ्जनम् ।

(४) 'चित्पतिर्मा' 'वाक्पतिर्मा' इत्यनयोः प्रजापतिः, 'देवो मा' इत्यस्य सविता ।

(५) 'आ वः' इत्यस्य देवाः ।

(६) 'स्वाहा यज्ञम्' 'स्वाहोरोरन्तरिक्षात्' 'स्वाहा द्यावापृथिवीभ्याम्' 'स्वाहा वातात्' इत्येषां यज्ञः ।

(७) 'आकूत्यै प्रयुजे' 'मेधायै मनसे' 'दीक्षायै तपसे' 'सरस्वत्यै पूष्णे' इत्येषामग्निः, 'आपो देवीः' इत्यस्य लिङ्गोक्ता ।

(८) 'विश्वो देवस्य' इत्यस्य सविता ।

(९) 'ऋक्सामयोः' इत्यस्य कृष्णाजिने, 'शर्मासि' इत्यस्य कृष्णाजिनम् ।

(१०) 'ऊर्गस्याङ्गिः' इत्यस्य मेखला, 'सोमस्य नीविः' इत्यस्य नीविः, 'विष्णोः शर्मासि' इत्यस्य वासः, 'इन्द्रस्य योनिः' 'सुसस्याः' इत्यनयोः कृष्णविषाणा, 'उच्छ्रयस्व' इत्यस्य दण्डः ।

(११) 'व्रतङ्कृणुत' इत्यस्य यज्ञः, 'दैवीन्धियम्' इत्यस्य धीः, 'ये देवा' इत्यस्याध्यात्मं वाक् प्राणोदानौ चक्षुः श्रोत्रम्, अधिदैवतश्चाग्निर्मित्रावरुणावादित्यो विश्वे देवाः ।

(१२) 'श्वात्राः पीताः' इत्यस्यापः ।

(१३) 'इयन्ते' 'पृथिव्याः' इत्यनयोर्लोष्टम्, 'अपो मुञ्चामि' इत्यस्य मूत्रम् ।

(१४) 'अग्ने त्वम्' (१५) 'पुनर्मनः' (१६) 'त्वमग्ने' इत्येषामग्निः, 'रास्स्वेयत्' इत्यस्य सोमः ।

(१७) 'एषा ते' इत्यस्य हिरण्यमाज्यञ्च, 'जूरसि' इत्यस्य वाक्, (१८) 'शुक्रमसि' इत्यस्य हिरण्यम् ।

(१९) 'चिदसि' (२०) 'अनु त्वा' (२१) 'वस्व्यस्यदितिः' इत्येषां सोमक्रयणी गौर्वाग्रूपा ।

(२२) 'अदित्यास्त्वा' इत्यस्याज्यम्, 'अस्मे रमस्व' 'अस्मे ते' 'त्वे रायः' 'मे रायः' 'मा वयम्' 'तोतो रायः' इत्येषां लिङ्गोक्ताः ।

(२३) 'समख्ये देव्या' इत्यस्य पत्न्याशीः ।

(२४) 'एष ते' इत्यस्य लिङ्गोक्ता, 'आस्माकोसि' इत्यस्य सोमः ।

(२५) 'अभि त्यम्' इत्यस्य सविता, 'प्रजाभ्यस्त्वा' 'प्रजास्त्वा' (२६) 'शुक्रन्त्वा' इत्येषां सोमः, 'सग्मे ते' 'अस्मे ते' इत्यनयोर्लिङ्गोक्ता, 'तपसस्तनूः' इत्यस्य अजा, 'परमेण पशुना' (२७) 'मित्रो नः' 'इन्द्रस्योरुम्' इत्येषां सोमः, 'स्वान भ्राजाङ्घारे' इत्यस्य धिष्ण्यनामानि ।

(२८) 'परि माग्ने' इत्यस्याग्निः ।

(२९) 'प्रति पन्थाम्' इत्यस्य पन्थाः ।

(३०) 'आदित्यास्त्वक्' इत्यस्य कृष्णाजिनम्, 'अदित्यै सदः' इत्यस्य सोमः, 'अस्तभ्नाद्द्याम्' (३१) 'वनेषु व्यन्तरिक्षम्' इत्यनयोर्वरुणः ।

(३२) 'सूर्यस्य चक्षुः' इत्यस्य कृष्णाजिनम् ।

(३३) 'उस्रावेतम्' इत्यस्यानड्वाहौ ।

(३४) 'भद्रो मेसि' इत्यस्य सोमः ।

(३५) 'नमो मित्रस्य' इत्यस्य सूर्यः ।
(३६) 'वरुणस्योत्तम्भनमसि' 'वरुणस्य स्कम्भसर्जनी स्थः' 'वरुणस्य ऋतसदन्यसि' 'वरुणस्य ऋतसदनमसि' 'वरुणस्य ऋतसदनमासीद' इत्येषां वरुणः ।
(३७) 'या ते' इत्यस्य सोमः ॥

छन्दः(१) 'एदमगन्म' (२) 'आपोस्माकम' इत्यनयोरत्यष्टिः, (५) 'आ वः' इत्यस्य दैव्यनुष्टुप्, (७) 'आपो देवीः' इत्यस्य विराट्, (८) 'विश्वो देवस्य' इत्यस्यानुष्टुप्, (१२) 'श्वात्राः पीताः' इत्यस्य जगती, (१४) 'अग्ने त्वम्' इत्यस्यानुष्टुप्, (१६) 'त्वमग्ने' इत्यस्य गायत्री, (२१) 'वस्व्यस्यदितिः' इत्यस्यानुष्टुब् बृहती वा, (२३) 'समख्ये देव्या' इत्यस्यास्तारपङ्क्तिः, (२५) 'अभि त्यम्' इत्यस्याष्टिः, (२८) 'परि माग्ने' इत्यस्य पुरस्ताद्बृहती, (२९) 'प्रति पन्थाम्' इत्यस्यानुष्टुप्, (३०) 'अस्तभ्नाद्द्याम्', (३१) 'वनेषु व्यन्तरिक्षम्' इत्यनयोस्त्रिष्टुप्, (३२) 'सूर्यस्य चक्षुः' इत्यस्यानुष्टुप्, (३३) 'उस्रावेतम्' इत्यस्योर्ध्वबृहती, (३५) 'नमो मित्रस्य' इत्यस्य जगती, (३७) 'या ते' इत्यस्य त्रिष्टुप् ॥

॥ हरिः ॐ ॥

॥१॥ एदमगन्म देवयजनम्पृथिव्या यत्र देवासोऽअजुषन्त विश्वे । ऋक्सामाभ्याᳬं
सन्तरन्तो यजुर्भी रायस्पोषेण समिषा मदेम । इमाऽआपः शमु मे सन्तु देवीरोषधे
त्रायस्व स्वधिते मैनᳬं हिᳬंसीः ॥१॥
आपोऽअस्मान्मातरः शुन्धयन्तु घृतेन नो घृतप्वः पुनन्तु । विश्वᳬं हि रिप्र-
म्प्रवहन्ति देवीरुदिदाभ्यः शुचिरा पूतऽएमि । दीक्षातपसोस्तनूरसि तान्त्वा
शिवाᳬं शग्माम्परिदधे भद्रंवर्णम्पुष्यन् ॥२॥
॥२॥ महीनाम्पयोसि वर्चोदाऽअसि वर्चो मे देहि ।
वृत्रस्यासि कनीनकश्चक्षुर्दाऽअसि चक्षुर्म्मे देहि ॥३॥
चित्पतिर्म्मा पुनातु वाक्पतिर्म्मा पुनातु देवो मा सविता पुनात्वच्छिद्रेण पवित्रेण
सूर्यस्य रश्मिभिः । तस्य ते पवित्रपते पवित्रपूतस्य यत्कामः पुने तच्छकेयम् ॥४॥
आ वो देवासऽईमहे वामम्प्रयत्यध्वरे ।
आ वो देवासऽआशिषो यज्ञियासो हवामहे ॥५॥
स्वाहा यज्ञम्मनसः स्वाहोरोरन्तरिक्षात्स्वाहा द्यावापृथिवीभ्याᳬं स्वाहा वाता-
दारभे स्वाहा ॥६॥
॥३॥ आकूत्यै प्रयुजेग्नये स्वाहा मेधायै मनसेग्नये स्वाहा दीक्षायै तपसेग्नये स्वाहा
सरस्वत्यै पूष्णेग्नये स्वाहा । आपो देवीर्बृहतीर्विश्वशम्भुवो द्यावापृथिवीऽउरो
ऽअन्तरिक्ष । बृहस्पतये हविषा विधेम स्वाहा ॥७॥
विश्वो देवस्य नेतुर्म्मर्त्तो वुरीत सख्यम् । विश्वो रायऽइषुध्यति द्युम्नंवृणीत
पुष्यसे स्वाहा ॥८॥

॥४॥ ऋक्सामयोः शिल्पे स्थस्ते वामारभे ते मा पातमास्य यज्ञस्योदृचः ।
शर्म्मासि शर्म्म मे यच्छ नमस्तेऽअस्तु मा मा हिᳬंसीः ॥९॥
ऊर्गस्याङ्गिरस्यूर्णम्म्रदाऽऊर्जम्मयि धेहि । सोमस्य नीविरसि विष्णोः शर्म्मासि
शर्म्म यजमानस्येन्द्रस्य योनिरसि सुसस्याः कृषीस्कृधि । उच्छ्रयस्व वनस्पत
ऽऊर्ध्वो मा पाह्यᳬंहसऽआस्य यज्ञस्योदृचः ॥१०॥
॥५॥ व्रतङ्कृणुत व्रतङ्कृणुताग्निर्ब्रह्माग्निर्यज्ञो वनस्पतिर्यज्ञियः । दैवीन्धियम्मनामहे
सुमृडीकामभिष्टये वर्चोधाँय्यज्ञवाहसᳬं सुतीर्था नोऽअसद्वशे । ये देवा मनोजाता
मनोयुजो दक्षक्रतवस्ते नोवन्तु ते नः पान्तु तेभ्यः स्वाहा ॥११॥
श्वात्राः पीता भवत यूयमापोऽअस्माकमन्तरुदरे सुशेवाः ।
ताऽअस्मभ्यमयक्ष्माऽअनमीवाऽअनागसः स्वदन्तु देवीरमृताऽऋतावृधः ॥१२॥
इयन्ते यज्ञिया तनूरपो मुञ्चामि न प्रजाम् ।
अᳬंहोमुचः स्वाहाकृताः पृथिवीमाविशत पृथिव्या सम्भव ॥१३॥
अग्ने त्वᳬं सुजागृहि वयᳬं सुमन्दिषीमहि ।
रक्षा णोऽअप्रयुच्छन्प्रबुधे नः पुनस्कृधि ॥१४॥
पुनर्म्मनः पुनरायुर्म्मऽआगन्पुनः प्राणः पुनरात्मा मऽआगन्पुनश्चक्षुः
पुनः श्रोत्रम्मऽआगन् । वैश्वानरोऽअदब्धस्तनूपाऽअग्निर्न्नः पातु दुरितादव-
द्यात् ॥१५॥
त्वमग्ने व्रतपाऽअसि देवऽआ मर्त्त्येष्वा । त्वंय्यज्ञेष्वीड्यः । रास्वेयत्सोमा भूयो
भर देवो नः सविता वसोर्दाता वस्वदात् ॥१६॥
॥६॥ एषा ते शुक्र तनूरेतद्वर्चस्तया सम्भव भ्राजङ्गच्छ ।
जूरसि धृता मनसा जुष्टा विष्णवे ॥१७॥
तस्यास्ते सत्यसवसः प्रसवे तन्वो यन्त्रमशीय स्वाहा ।
शुक्रमसि चन्द्रमस्यमृतमसि वैश्वदेवमसि ॥१८॥
चिदसि मनासि धीरसि दक्षिणासि क्षत्रियासि यज्ञियास्यदितिरस्युभयतः-
शीर्ष्णी । सा नः सुप्राची सुप्रतीच्येधि मित्रस्त्वा पदि बध्नीताम्पूषाध्वनस्पात्विन्द्रा-
याध्यक्षाय ॥१९॥
अनु त्वा माता मन्यतामनु पितानु भ्राता सगर्भ्योनु सखा सयूथ्यः ।
सा देवि देवमच्छेहीन्द्राय सोमᳬं रुद्रस्त्वावर्त्तयतु स्वस्ति सोमसखा पुनरेहि ॥२०॥

॥७॥ व्वस्व्युस्यदितिरस्यादित्त्यासि रुद्द्रासि चन्द्द्रासि ।
बृहस्प्पतिष्ट्वा सुम्म्ने रम्म्णातु रुद्द्रो व्वसुभिराचके ॥२१॥
अदित्त्यास्त्वा मूर्द्धन्नाजिघर्म्मि देवयजने पृथिव्व्याऽइडायास्प्पदमसि घृतवत्त्स्वाहा ।
अस्म्मे रमस्वास्म्मे ते बन्धुस्त्त्वे रायो मे रायो मा व्वयꣳ रायस्प्पोषेण व्वियौष्म्म
तोतो रायः ॥२२॥
समक्ख्ये देव्व्या धिया सन्दक्क्षिणयोरुचक्क्षसा ।
मा मऽआयुः प्प्रमोषीम्मोऽअहन्तव व्वीरँव्विदेय तव देवि सन्दृशि ॥२३॥
॥८॥ एष ते गायत्त्रो भागऽइति मे सोमाय ब्रूतादेष ते त्त्रैष्टुभो भागऽइति मे सोमाय
ब्रूतादेष ते जागतो भागऽइति मे सोमाय ब्रूताच्छन्दोनामानाꣳ साम्म्राज्ज्यङ्गच्छेति मे
सोमाय ब्रूतादास्म्माकोसि शुक्क्रस्ते ग्ग्रह्व्यो व्विचितस्त्वा व्विचिन्न्वन्तु ॥२४॥
अभि त्त्यन्देवꣳ सवितारमोण्ण्योः कविक्क्रतुमर्च्चामि सत्त्यसवꣳ रत्न्नधामभि प्प्रियम्म-
तिङ्कविम् । ऊर्द्ध्वा यस्यामतिर्ब्भाऽअदिद्द्युतत्त्सवीमनि हिरण्ण्यपाणिरमिमीत सुक्क्रतुः
कृपा स्वः । प्रजाब्भ्यस्त्वा प्प्रजास्त्वानुप्प्राणन्तु प्प्रजास्त्वमनुप्प्राणिहि ॥२५॥
॥९॥ शुक्क्रन्त्वा शुक्क्रेण क्क्रीणामि चन्द्द्रञ्चन्द्द्रेणामृतममृतेन । सग्ग्मे ते गोरस्म्मे ते चन्द्द्राणि
तपसस्त्तनूरसि प्प्रजापतेर्व्वर्ण्णः परमेण पशुना क्क्रीयसे सहस्र्रपोषम्पुषेयम् ॥२६॥
मित्त्रो नऽएहि सुमित्त्रधऽइन्द्द्रस्योरुमाविश दक्क्षिणमुशन्नुशन्तꣳ स्योनः स्योनम् ।
स्वान ब्भ्राजाङ्घारे बम्भारे हस्त्त सुहस्त्त कृशानवेते वः सोमक्क्रयणास्तान्न्रक्षद्ध्वम्मा
वो दभन् ॥२७॥

परि माग्ग्ने दुश्चरिताद्बाधस्वा मा सुचरिते भज ।
उदायुषा स्वायुषोदस्त्थाममृताꣳ॥ऽअनु ॥२८॥
प्रति पन्थामपद्महि स्वस्तिगामनेहसम् ।
येन व्विश्श्वाः परि द्विषो वृणक्त्ति व्विन्दते व्वसु ॥२९॥

॥१०॥ अदित्त्यास्त्वगस्यदित्त्यै सदऽआसीद । अस्तभ्भ्नाद्द्यां व्वृषभोऽअन्तरिक्क्षममिमीत व्वरि-
माणम्पृथिव्व्याः । आसीदद्विश्श्वा भुवनानि सम्म्राड्विश्श्वेत्तानि व्वरुणस्य व्व्रतानि ॥३०॥
व्वनेषु व्व्युन्तरिक्क्षन्ततान व्वाजमर्व्वत्त्सु पयऽउस्त्रियासु ।
हृत्त्सु क्क्रतुँव्वरुणो व्विक्क्ष्वग्ग्निन्दिवि सूर्य्यमदधात्त्सोममद्द्रौ ॥३१॥
सूर्य्यस्य चक्क्षुरारोहाग्ग्नेरक्क्ष्णः कनीनकम् ।
यत्त्रैतशेभिरीयसे ब्भ्राजमानो व्विपश्चिता ॥३२॥
उस्त्रावेतन्धूर्षाहौ युज्ज्येथामनश्श्रूऽअवीरहणौ ब्रह्मचोदनौ ।
स्वस्त्ति यजमानस्य गृहान्ग्गच्छतम् ॥३३॥
भद्द्रो मेसि प्प्रच्च्यवस्व भुवस्प्पते व्विश्श्वान्न्यभि धामानि । मा त्त्वा परिपरिणो व्विदन्न्मा
त्त्वा परिपन्थिनो व्विदन्न्मा त्त्वा व्वृकाऽअघायवो व्विदन् । श्येनो भूत्त्वा परापत यज-
मानस्य गृहान्ग्गच्छ तन्नौ सँस्कृतम् ॥३४॥
नमो मित्त्रस्य व्वरुणस्य चक्क्षसे महो देवाय तदृतꣳ सपर्य्यत ।
दूरेदृशे देवजाताय केतवे दिवस्प्पुत्त्राय सूर्य्याय शꣳसत ॥३५॥
व्वरुणस्योत्त्तम्भनमसि व्वरुणस्य स्क्कम्भसर्ज्जनी स्त्थो व्वरुणस्यऽऋतसदन्न्यसि व्वरुणस्य
ऽऋतसदनमसि व्वरुणस्यऽऋतसदनमासीद ॥३६॥
या ते धामानि हविषा यजन्ति ता ते व्विश्श्वा परिभूरस्तु यज्ज्ञम् ।
गयस्प्फानः प्प्रतरणः सुवीरोवीरहा प्प्रचरा सोम दुर्य्यान् ॥३७॥

॥ इति चतुर्थोऽध्यायः ॥

---

# अथ पञ्चमोऽध्यायः

**ऋषिः** (१) 'अग्नेस्तनूः' इत्यारभ्य (४३) 'अतस्त्वम्' इत्यन्तानां सामान्यतः प्रजापतिर्ऋषिः। विशेषतश्च—(१४) 'युञ्जते मनः' इत्यस्य श्यावाश्वः, (१५) 'इदं विष्णुः' इत्यस्य मेधातिथिः, (१६) 'इरावती' इत्यस्य वसिष्ठः, (१८) 'विष्णोर्नुकम्' (२०) 'प्र तद्विष्णुः' इत्यनयोरौतथ्यो दीर्घतमाः, (२९) 'परि त्वा' इत्यस्य मधुच्छन्दाः, (३५) 'त्वꣳ सोम' इत्यस्य भार्गवः ऋतुः, (३६) 'अग्ने नय' इत्यस्यागस्त्यः ॥

**देवता** (१) 'अग्नेस्तनूः' 'सोमस्य तनूः' 'अतिथेरातिथ्यम्' 'श्येनाय त्वा' 'अग्नये त्वा' इत्येषां विष्णुः ।
(२) 'अग्नेर्जनित्रम्' इत्यस्य शकलम्, 'वृषणौ स्थः' इत्यस्य दर्भतरुणके, 'उर्वश्यसि' 'आयुरसि' 'पुरूरवा असि' इत्येषां लिङ्गोक्ताः, 'गायत्रेण त्वा' 'त्रैष्टुभेन त्वा' 'जागतेन त्वा' इत्येषामग्निः ।
(३) 'भवतन्नः' (४) 'अग्नावग्निः' इत्यनयोर्निर्मथ्याहवनीयावग्नी ।
(५) 'आपतये त्वा' इत्यस्य वायुः, 'अनाधृष्टमसि' इत्यस्याज्यम् ।
(६) 'अग्ने व्रतपाः' इत्यस्याग्निः ।
(७) 'अꣳशुरꣳशुष्टे' इत्यस्य सोमः, 'एष्टा रायः' इत्यस्य लिङ्गोक्ता ।
(८) 'या ते अग्नेयःशया' 'या ते अग्ने रजःशया' 'या ते अग्ने हरिशया' इत्येषामग्निः ।
(९) 'तप्तायनी मेसि' 'वित्तायनी मेसि' 'अवतान्मा नाथितात्' 'अवतान्मा व्यथितात्' इत्येषां पृथिवी, 'विदेदग्निः' इत्यादित्रयाणामग्निः, 'अग्ने अङ्गिरः' इत्यादित्रयाणाम्, 'योस्याम्' 'यो द्वितीयस्याम्' 'यस्तृतीयस्याम्' 'अनु त्वा' इत्येषाञ्च लिङ्गोक्ताः ।
(१०) 'सिꣳह्यसि० कल्पस्व' 'सिꣳह्यसि० शुन्धस्व' 'सिꣳह्यसि० शुम्भस्व' इत्येषां वेदिः ।
(११) 'इन्द्रघोषस्त्वा' 'प्रचेतास्त्वा' 'मनोजवास्त्वा' 'विश्वकर्मा त्वा' इत्येषामुत्तरवेदिः, 'इदमहम्' इत्यस्यापः ।
(१२) 'सिꣳह्यसि स्वाहा' 'सिꣳह्यस्यादित्यवनिः' 'सिꣳह्यसि ब्रह्मवनिः' 'सिꣳह्यसि सुप्रजावनिः' 'सिꣳह्यस्या वह' इत्येषां वाक्, 'भूतेभ्यस्त्वा' इत्यस्य स्रुक् ।

(१३) 'ध्रुवोसि' 'ध्रुवक्षिदसि' 'अच्युतक्षिदसि' इत्यषां परिधयः, 'अग्नेः पुरीषम्' इत्यस्य गुग्गुल्वादयः सम्भाराः ।

(१४) 'युञ्जते मनः' इत्यस्य सविता ।

(१५) 'इदं विष्णुः' (१६) 'इरावती' इत्यनयोर्विष्णुः ।

(१७) 'देवश्रुतौ देवेषु' इत्यस्याक्षधुरौ, 'प्राची प्रेतम्' 'स्वङ्गोष्ठम्' 'अत्र रमेथाम्' इत्येषां हविर्धाने ।

(१८) 'विष्णोर्नुकम्' (१९) 'दिवो वा' (२०) 'प्र तद्विष्णुः' (२१) 'विष्णो रराटम्' 'विष्णोः श्नप्त्रे' 'विष्णोः स्यूः' 'विष्णोर्ध्रुवः' 'वैष्णवमसि' इत्येषां विष्णुः ।

(२२) 'देवस्य त्वा' इत्यस्य सविता, 'आददे नार्यसि' इत्यस्याभ्रिः, 'इदमहम्' इत्यस्य रक्षोघ्नम्, 'बृहन्नसि' इत्यस्योपरवाः, (२३) 'इदमहन्तम् इत्यादिचतुर्णाम् 'उत्कृत्याङ्किरामि' इत्यस्य च लिङ्गोक्ताः ।

(२४) 'स्वराडसि' 'सत्रराडसि' 'जनराडसि' 'सर्वराडसि' इत्येषामुपरवाः ।

(२५) 'रक्षोहणो वः' इत्यादित्रयाणाम्, 'रक्षोहणौ वाम्' इत्यादिद्वयोः, 'वैष्णवमसि' 'वैष्णवा स्थ' इत्यनयोश्च विष्णुः ।

(२६) 'देवस्य त्वा' इत्यस्य सविता, 'आददे नार्यसि' इत्यस्याभ्रिः, 'इदमहम्' इत्यस्य रक्षोघ्नम्, 'यवोसि' इत्यस्य यवः, 'दिवे त्वा' 'अन्तरिक्षाय त्वा' 'पृथिव्यै त्वा' इत्येषामौदुम्बरी, 'शुन्धन्ताम्' 'पितृषदनमसि' इत्यनयोः पितरः ।

(२७) 'उद्दिवꣳ स्तभान' 'द्युतानस्त्वा' 'ब्रह्मवनि त्वा' 'ब्रह्म दृꣳह' (२८) 'ध्रुवासि ध्रुवः' इत्येषामौदुम्बरी, 'घृतेन द्यावापृथिवी' इत्यस्य द्यावापृथिव्यौ, 'इन्द्रस्य छदिः' (२९) 'परि त्वा' (३०) 'इन्द्रस्य स्यूः' 'इन्द्रस्य ध्रुवः' 'ऐन्द्रमसि' इत्येषामिन्द्रः, 'वैश्वदेवमसि' इत्यस्य विश्वे देवाः ।

(३१) 'विभूरसि' 'वह्निरसि' 'श्वात्रोसि' 'तुथोसि' (३२) 'उशिगसि' 'अङ्गारिरसि' 'अवस्यूरसि' 'शुन्ध्यूरसि' इत्येषां धिष्ण्या अग्नयः, 'सम्राडसि' इत्यस्याहवनीयः, 'परिषद्योसि' इत्यस्य बहिष्पवमानदेशः, 'नभोसि' इत्यस्य चात्वालः, 'मृष्टोसि' इत्यस्य शामित्रः, 'ऋतधामासि' इत्यस्यौदुम्बरी ।

(३३) 'समुद्रोसि' इत्यस्य ब्रह्मासनम्, 'अजोसि' इत्यस्य शालाद्वार्यः, 'अहिरसि' इत्यस्य प्राजहितः, 'वागसि' इत्यस्य सदः, 'ऋतस्य द्वारौ' इत्यस्य द्वार्ये, 'अध्वनामध्वपते' इत्यस्य सूर्यः ।

(३४) 'मित्रस्य मा' इत्यस्य ऋत्विजः, 'अग्नयः सगराः' इत्यस्य धिष्ण्याः ।

(३५) 'ज्योतिरसि' इत्यस्य विश्वे देवाः, 'त्वꣳ सोम' इत्यस्य सोमः, 'जुषाणो अप्तुः' इत्यस्य अप्तुः ।

(३६) 'अग्ने नय' (३७) 'अयन्नः' इत्यनयोरग्निः ।

(३८) 'उरु विष्णो' इत्यस्य विष्णुः ।

(३९) 'देव सवितः' इत्यस्य सविता, 'एतत्त्वम्' इत्यस्य सोमः, 'स्वाहा निर्वरुणस्य' इत्यस्य लिङ्गोक्ताः ।

(४०) 'अग्ने व्रतपाः' इत्यस्याग्निः ।

(४१) 'उरु विष्णो' इत्यस्य विष्णुः ।

(४२) 'अत्यन्यान्' इत्यस्य वनस्पतिः, 'ओषधे त्रायस्व' इत्यस्य कुशतरुणम्, 'स्वधिते मैनम्' इत्यस्य परशुः ।

(४३) 'द्याम्मा' 'अतस्त्वम्' इत्यनयोर्वनस्पतिः ॥

छन्दः (३) 'भवतन्नः' इत्यस्य पङ्क्तिः, (४) 'अग्नावग्निः' इत्यस्य विराट्, (७) 'अꣳशुरꣳशुष्टे' इत्यस्य प्रकृतिः, (१४) 'युञ्जते मनः' इत्यस्य जगती, (१५) 'इदं विष्णुः' इत्यस्य गायत्री, (१६) 'इरावती' (१८) 'विष्णोर्नुकम्' (१९) 'दिवो वा' [ उभयत्र 'विष्णवे त्वा' इति यजुः ] (२०) 'प्र तद्विष्णुः' इत्येषां त्रिष्टुप्, (२९) 'परि त्वा' इत्यस्यानुष्टुप्, (३५) 'त्वꣳ सोम' इत्यस्य गायत्री, 'जुषाणो अप्तुः' इत्यस्यैकपदा विराट्, [ 'स्वाहा' इति यजुः ] (३६) 'अग्ने नय' (३७) 'अयन्नः' इत्यनयोस्त्रिष्टुप्. (३८) 'उरु विष्णो' इत्यस्यानुष्टुप्, [ उभयत्र 'स्वाहा' इति यजुः ] ॥

॥ हरिः ॐ ॥

॥१॥ अग्नेस्तनूरसि विष्णवे त्वा सोमस्य तनूरसि विष्णवे त्वातिथेरातिथ्यमसि विष्णवे
त्वा श्येनाय त्वा सोमभृते विष्णवे त्वाग्नये त्वा रायस्पोषदे विष्णवे त्वा ॥१॥
अग्नेर्जनित्रमसि वृषणौ स्थऽउर्वश्यस्यायुरसि पुरूरवाऽअसि । गायत्रेण त्वा
च्छन्दसा मन्थामि त्रैष्टुभेन त्वा च्छन्दसा मन्थामि जागतेन त्वा च्छन्दसा
मन्थामि ॥२॥
भवतन्नꣳ समनसौ सचेतसावरेपसौ ।
मा यज्ञꣳ हिꣳसिष्टम्मा यज्ञपतिञ्जातवेदसौ शिवौ भवतमद्य नः ॥३॥
अग्नावग्निश्चरति प्रविष्टऽऋषीणाम्पुत्रोऽअभिशस्तिपावा ।
स नः स्योनः सुयजा यजेह देवेभ्यो हव्यꣳ सदमप्रयुच्छन्त्स्वाहा ॥४॥
॥२॥ आपतये त्वा परिपतये गृह्णामि तनूनप्त्रे शाक्वराय शक्वनऽओजिष्ठाय । अना-
धृष्टमस्यनाधृष्यन्देवानामोजोनभिशस्त्यभिशस्तिपाऽअनभिशस्तेन्यमञ्जसा सत्य-
मुपगेषꣳ स्विते मा धाः ॥५॥
अग्ने व्रतपास्त्वे व्रतपा या तव तनूरियꣳ सा मयि यो मम तनूरेषा सा त्वयि ।
सह नौ व्रतपते व्रतान्यनु मे दीक्षान्दीक्षापतिर्मन्यतामनु तपस्तपस्पतिः ॥६॥
अꣳशुरꣳशुष्टे देव सोमाप्यायतामिन्द्रायैकधनविदे । आ तुभ्यमिन्द्रः प्यायं-
तामा त्वमिन्द्राय प्यायस्व । आप्याययास्मान्त्सखीन्त्सन्न्या मेधया स्वस्ति ते देव
सोम सुत्यामशीय । एष्टा रायः प्रेषे भगायऽऋतमृतवादिभ्यो नमो द्यावापृथि-
वीभ्याम् ॥७॥
या तेऽअग्नेयःशया तनूर्वर्षिष्ठा गह्वरेष्ठा । उग्रँ वचोऽअपावधीत्त्वेषँ वचोऽअपावधी-
त्स्वाहा । या तेऽअग्ने रजःशया तनूर्वर्षिष्ठा गह्वरेष्ठा । उग्रँ वचोऽअपावधीत्त्वेषँ-
वचोऽअपावधीत्स्वाहा । या तेऽअग्ने हरिशया तनूर्वर्षिष्ठा गह्वरेष्ठा । उग्रँ वचो
ऽअपावधीत्त्वेषँ वचोऽअपावधीत्स्वाहा ॥८॥
॥३॥ तप्तायनी मेसि वित्तायनी मेस्यवतान्मा नाथितादवतान्मा व्यथितात् । विदेद-
ग्निर्नभो नामाग्नेऽअङ्गिरऽआयुना नाम्नेहि योस्याम्पृथिव्यामसि यत्तेनाधृष्टन्नाम
यज्ञियन्तेन त्वा दधे विदेदग्निर्नभो नामाग्नेऽअङ्गिरऽआयुना नाम्नेहि यो द्वितीय-
स्याम्पृथिव्यामसि यत्तेनाधृष्टन्नाम यज्ञियन्तेन त्वादधे विदेदग्निर्नभो नामाग्ने
ऽअङ्गिरऽआयुना नाम्नेहि यस्तृतीयस्याम्पृथिव्यामसि यत्तेनाधृष्टन्नाम यज्ञियन्तेन
त्वा दधे । अनु त्वा देववीतये ॥९॥

सिꣳहृसि सपत्नसाही देवेभ्यः कल्पस्व सिꣳहृसि सपत्नसाही देवेभ्यः
शुन्धस्व सिꣳहृसि सपत्नसाही देवेभ्यः शुम्भस्व ॥१०॥

॥४॥ इन्द्रघोषस्त्वा वसुभिः पुरस्तात्पातु प्रचेतास्त्वा रुद्रैः पश्चात्पातु मनोजवास्त्वा
पितृभिर्दक्षिणतः पातु विश्वकर्म्मा त्वादित्यैरुत्तरतः पात्विदमहन्तप्तँवार्ब्बहिर्द्धा
यज्ञान्निःसृजामि ॥११॥

सिꣳहृसि स्वाहा सिꣳहृस्यादित्यवनिः स्वाहा सिꣳहृसि ब्रह्मवनिः क्षत्र-
वनिः स्वाहा सिꣳहृसि सुप्रजावनी रायस्पोषवनिः स्वाहा सिꣳहृस्यावह
देवान्यजमानाय स्वाहा भूतेभ्यस्त्वा ॥१२॥

ध्रुवोसि पृथिवीन्दृꣳह ध्रुवक्षिदस्यन्तरिक्षन्दृꣳहाच्युतक्षिदसि दिवन्दृꣳहाग्नेः
पुरीषमसि ॥१३॥

॥५॥ युञ्जते मनऽउत युञ्जते धियो विप्रा विप्रस्य बृहतो विपश्चितः ।
वि होत्रा दधे वयुनाविदेकऽइन्मही देवस्य सवितुः परिष्टुतिः स्वाहा ॥१४॥
इदँविष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढमस्य पाꣳसुरे स्वाहा ॥१५॥
इरावती धेनुमती हि भूतꣳ सूयवसिनी मनवे दशस्या ।
व्यस्कभ्ना रोदसी विष्णवेते दाधर्त्थ पृथिवीमभितो मयूखैः स्वाहा ॥१६॥
देवश्रुतौ देवेष्वा घोषतम्प्राची प्रेतमध्वरङ्कल्पयन्तीऽऊर्द्ध्वँयज्ञन्नयतम्मा जिह्व-
रतम् । स्वङ्गोष्ठमावदतन्देवी दुर्य्येऽआयुर्म्मा निर्वादिष्टम्प्रजाम्मा निर्वादिष्टमत्र
रमेथाँवर्ष्मन्पृथिव्याः ॥१७॥
विष्णोर्नुकँवीर्य्याणि प्रवोचँयः पार्थिवानि विममे रजाꣳसि ।
योऽअस्कभायदुत्तरꣳ सधस्थँविचक्रमाणस्त्रेधोरुगायो विष्णवे त्वा ॥१८॥
दिवो वा विष्णऽउत वा पृथिव्या महो वा विष्णऽउरोरन्तरिक्षात् ।
उभा हि हस्ता वसुना पृणस्वा प्रयच्छ दक्षिणादोत सव्याद्विष्णवे त्वा ॥१९॥
प्र तद्विष्णु स्तवते वीर्य्येण मृगो न भीमः कुचरो गिरिष्ठाः ।
यस्योरुषु त्रिषु विक्रमणेष्वधिक्षियन्ति भुवनानि विश्वा ॥२०॥
विष्णो रराटमसि विष्णोः श्नप्त्रे स्थो विष्णोः स्यूरसि विष्णोर्ध्रुवोसि ।
वैष्णवमसि विष्णवे त्वा ॥२१॥

॥६॥ देवस्य त्वा सवितुः प्रसवेश्विनोर्ब्बाहुभ्याम्पूष्णो हस्ताभ्याम् । आददे नार्य्यसीद-
महꣳ रक्षसाङ्ग्रीवाऽअपि कृन्तामि । बृहन्नसि बृहद्रवा बृहतीमिन्द्राय वाचँवद ॥२२॥

रक्षोहणँवलगहनँवैष्णवीमिदमहन्तँवलगमुत्किरामि यम्मे निष्ट्यो यममात्यो
निचखानेदमहन्तँवलगमुत्किरामि यम्मे समानो यमसमानो निचखानेदमहन्तँव-
लगमुत्किरामि यम्मे सबन्धुर्य्यमसबन्धुर्न्निचखानेदमहन्तँवलगमुत्किरामि यम्मे
सजातो यमसजातो निचखानोत्कृत्याङ्किरामि ॥२३॥
स्वराडसि सपत्नहा सत्रराडस्यभिमातिहा जनराडसि रक्षोहा सर्व्वराडस्यमित्रहा ॥२४॥
रक्षोहणो वो वलगहनः प्रोक्षामि वैष्णवान्रक्षोहणो वो वलगहनोवनयामि
वैष्णवान्रक्षोहणो वो वलगहनोवस्तृणामि वैष्णवान्रक्षोहणौ वाँवलगहनाऽउप-
दधामि वैष्णवी रक्षोहणौ वाँवलगहनौ पर्य्यूहामि वैष्णवी वैष्णवमसि
वैष्णवा स्थ ॥२५॥

॥७॥ देवस्य त्वा सवितुः प्रसवेश्विनोर्ब्बाहुभ्याम्पूष्णो हस्ताभ्याम् । आददे
नार्य्यसीदमहꣳ रक्षसाङ्ग्रीवाऽअपि कृन्तामि । यवोसि यवयास्मद्द्वेषो यवयारातीर्द्दिवे
त्वान्तरिक्षाय त्वा पृथिव्यै त्वा शुन्धन्ताँल्लोकाः पितृषदनाः पितृषदनमसि ॥२६॥
उद्दिवꣳ स्तभानान्तरिक्षम्पृण दृꣳहस्व पृथिव्यान्द्युतानस्त्वा मारुतो मिनोतु
मित्रावरुणौ ध्रुवेण धर्म्मणा । ब्रह्मवनि त्वा क्षत्रवनि रायस्पोषवनि पर्य्यूहामि ।
ब्रह्म दृꣳह क्षत्रन्दृꣳहायुर्दृꣳह प्रजान्दृꣳह ॥२७॥
ध्रुवासि ध्रुवोयँयजमानोस्मिन्नायतने प्रजया पशुभिर्ब्भूयात् । घृतेन द्यावापृथिवी
पूर्य्येथामिन्द्रस्य च्छदिरसि विश्वजनस्य च्छाया ॥२८॥
परि त्वा गिर्वणो गिरऽइमा भवन्तु विश्वतः ।
वृद्धायुमनु वृद्धयो जुष्टा भवन्तु जुष्टयः ॥२९॥
इन्द्रस्य स्यूरसीन्द्रस्य ध्रुवोसि । ऐन्द्रमसि वैश्वदेवमसि ॥३०॥

॥८॥ विभूरसि प्रवाहणो वह्निरसि हव्यवाहनः ।
श्वात्रोसि प्रचेतास्तुथोसि विश्ववेदाऽउशिगसि ॥३१॥
उशिगसि कविरङ्घारिरसि बम्भारिरवस्यूरसि दुवस्वाञ्छुन्ध्यूरसि मार्ज्जालीयः
सम्राडसि कृशानुः परिषद्योसि पवमानो नभोसि प्रतक्वा मृष्टोसि हव्यसूदनऽ
ऋतधामासि स्वर्ज्योतिः समुद्रोसि ॥३२॥
समुद्रोसि विश्वव्यचाऽअजोस्येकपादहिरसि बुध्न्यो वागस्यैन्द्रमसि सदोस्यृतस्य
द्वारौ मा मा सन्ताप्तमध्वनामध्वपते प्र मा तिर स्वस्ति मेस्मिन्पथि देवयाने
भूयान्मित्रस्य मा ॥३३॥

मित्रस्य मा चक्षुषेक्षध्वमग्नयः सगराः सगरा स्थ सगरेण नाम्ना रौद्रेणानीकेन
पात माग्नयः पिपृत माग्नयो गोपायत मा नमो वोस्तु मा मा हिꣳसिष्ट ॥३४॥
॥९॥ ज्योतिरसि विश्वरूपं विश्वेषान्देवानाꣳ समित्। त्वꣳ सोम तनूकृद्भ्यो द्वेषोभ्योऽन्य-
कृतेभ्यऽउरु यन्तासि वरूथꣳ स्वाहा जुषाणोऽअप्तुराज्यस्य वेतु स्वाहा ॥३५॥
अग्ने नय सुपथा रायेऽअस्मान्विश्वानि देव वयुनानि विद्वान्। युयोध्यस्म-
ज्जुहुराणमेनो भूयिष्ठान्ते नमऽउक्तिंविधेम ॥३६॥
अयन्नोऽअग्निर्वरिवस्कृणोत्वयम्मृधः पुरऽएतु प्रभिन्दन्।
अयँवाजाञ्जयतु वाजसातावयꣳ शत्रूञ्जयतु जर्हृषाणः स्वाहा ॥३७॥
उरु विष्णो विक्रमस्वोरु क्षयाय नस्कृधि।
घृतङ्घृतयोने पिब प्रप्र यज्ञपतिन्तिर स्वाहा ॥३८॥
देव सवितरेष ते सोमस्तꣳ रक्षस्व मा त्वा दभन्। एतत्त्वन्देव सोम देवो देवाँ२॥ऽ
उपागाऽइदमहम्मनुष्यान्त्सह रायस्पोषेण स्वाहा निर्वरुणस्य पाशान्मुच्ये ॥३९॥
अग्ने व्रतपास्त्वे व्रतपा या तव तनूर्मय्यभूदेषा सा त्वयि यो मम तनूस्त्वय्यभूदियꣳ
सा मयि। यथायथन्नौ व्रतपते व्रतान्यनु मे दीक्षान्दीक्षापतिरमꣳस्तानु तपस्तप-
स्पतिः ॥४०॥
॥१०॥ उरु विष्णो विक्रमस्वोरु क्षयाय नस्कृधि।
घृतङ्घृतयोने पिब प्रप्र यज्ञपतिन्तिर स्वाहा ॥४१॥
अत्यन्याँ२॥ऽअगान्नान्याँ२॥ऽउपागामर्वाक्त्वा परेभ्योविदम्परोवरेभ्यः। तन्त्वा
जुषामहे देव वनस्पते देवयज्यायै देवास्त्वा देवयज्यायै जुषन्ताँविष्णवे त्वा।
ओषधे त्रायस्व स्वधिते मैनꣳ हिꣳसीः ॥४२॥
द्याम्मा लेखीरन्तरिक्षम्मा हिꣳसीः पृथिव्या सम्भव। अयꣳ हि त्वा स्वधितिस्ते-
तिजानः प्रणिनाय महते सौभगाय। अतस्त्वन्देव वनस्पते शतवल्शो विरोह
सहस्रवल्शा वि वयꣳ रुहेम ॥४३॥

॥ इति पञ्चमोऽध्यायः ॥

# अथ षष्ठोऽध्यायः

ऋषिः (१) 'देवस्य त्वा' इत्यारभ्य (३७) 'त्वमङ्ग' इत्यन्तानां सामान्यतः प्रजापतिर्ऋषिः। विशेषतश्च—
(३) 'या ते' इत्यस्य दीर्घतमाः, (४) 'विष्णोः कर्माणि' (४) 'तद्विष्णोः' (२४) 'अमूर्याः' इत्येषां मेधातिथिः।
(२९) 'यमग्ने' इत्यस्य मधुच्छन्दाः, (३७) 'त्वमङ्ग' इत्यस्य गोतमः॥

देवता (१) 'देवस्य त्वा' इत्यस्य सविता, 'आददे नार्यसि' इत्यस्याभ्रिः, 'इदमहम्' इत्यस्य रक्षोहा, 'यवोसि' इत्यस्य यवः, 'दिवे त्वा' 'अन्तरिक्षाय त्वा' 'पृथिव्यै त्वा' इत्येषामौदुम्बरी, 'शुन्धन्ताम्' 'पितृषदनमसि' इत्यनयोः पितरः।
(२) 'अग्रेणीरसि' इत्यस्य शकलम्, 'सुपिप्पलाभ्यः' इत्यस्य चषालम्, 'देवस्त्वा' 'धामग्रेण' (३) 'या ते' 'ब्रह्मवनि त्वा' 'ब्रह्म दृꣳह' इत्येषां यूपः।
(४) 'विष्णोः कर्माणि' (५) 'तद्विष्णोः' इत्यनयोर्विष्णुः।
(६) 'परिवीरसि' 'एष ते' इत्यनयोर्यूपः, 'दिवः सूनुः' इत्यस्य स्वरुः।
(७) 'उपावीरसि' इत्यस्य तृणम्, 'उप देवान्' इत्यस्य लिङ्गोक्ताः।
(८) 'ऋतस्य त्वा' इत्यस्य पशुः।
(९) 'देवस्य त्वा' इत्यस्य सविता, 'अग्नीषोमाभ्याम्' इत्यस्याग्नीषोमौ, 'अद्भ्यस्त्वौषधीभ्यः' (१०) 'अपाम्पेरुरसि' 'सन्ते प्राणः' इत्येषां पशुः, 'आपो देवीः' इत्यस्यापः।
(११) 'घृतेनाक्तौ' इत्यस्य स्वरुशासौ, 'रेवति यजमाने' इत्यस्य वाक्, 'वर्षो वर्षीयसि' इत्यस्य तृणम्, 'स्वाहा देवेभ्यः' 'देवेभ्यः स्वाहा' इत्यनयोर्देवाः।
(१२) 'माहिर्भूः' इत्यस्य रज्जुः, 'नमस्ते' इत्यस्य यज्ञः।
(१३) 'देवीरापः' इत्यस्यापः, 'सुपरिविष्टाः' इत्यस्याशीः।
(१४) 'वाचन्ते' 'प्राणन्ते' 'चक्षुस्ते' 'श्रोत्रन्ते' 'नाभिन्ते' 'मेढ्रन्ते' 'पायुन्ते' 'चरित्राँस्ते' (१५) 'मनस्ते' 'वाक्ते' 'प्राणस्ते' 'चक्षुस्ते' 'श्रोत्रन्ते' 'यत्ते क्रूरम्' इत्येषां पशुः, 'शमहोभ्यः' इत्यस्य लिङ्गोक्ताः, 'ओषधे त्रायस्व' इत्यस्य तृणम्, 'स्वधिते मैनम्' इत्यस्य असिः।
(१६) 'रक्षसाम्भागः' इत्यस्य लिङ्गोक्ताः, 'निरस्तम्' 'इदमहम्' इत्यनयो रक्षोहा, 'घृतेन द्यावापृथिवी' इत्यस्य द्यावापृथिव्यौ, 'वायो वेः' इत्यस्य वायुः, 'अग्निराज्यस्य' इत्यस्याग्निः, 'स्वाहाकृते' इत्यस्य वपाश्रपण्यौ।
(१७) 'इदमापः' इत्यस्यापः।
(१८) 'सन्ते मनः' इत्यस्य हृदयम्, 'रेडस्यग्निः' इत्यस्य वसा, 'प्रयुतन्द्वेषः' इत्यस्य लिङ्गोक्ता।
(१९) 'घृतङ्घृतपावानः' इत्यस्य विश्वे देवाः, 'दिशः' 'प्रदिशः' 'आदिशः' 'विदिशः' 'उद्दिशः' 'दिग्भ्यः' इत्येषां दिशः।
(२०) 'ऐन्द्रः प्राणः' इत्यस्य लिङ्गोक्ता, 'देव त्वष्टः' इत्यस्य त्वष्टा।
(२१) 'समुद्रङ्गच्छ' 'अन्तरिक्षङ्गच्छ' 'देवꣳ सवितारम्' 'मित्रावरुणौ गच्छ' 'अहोरात्रे गच्छ' 'छन्दाꣳसि गच्छ' 'द्यावापृथिवी गच्छ' 'यज्ञङ्गच्छ' 'सोमङ्गच्छ' 'दिव्यन्नभः' 'अग्निं वैश्वानरम्' 'मनो मे' इत्येषां लिङ्गोक्ताः, 'दिवन्ते' इत्यस्य स्वरुः।
(२२) 'मापो मौषधीः' इत्यस्य हृदयशूलम्, 'धाम्नोधाम्नः' 'यदाहुः' इत्यनयोर्वरुणः, 'सुमित्रिया नः' इत्यस्यापः।
(२३) 'हविष्मतीः' इत्यस्य लिङ्गोक्ताः।
(२४) 'अग्नेर्वः' 'इन्द्राग्न्योः' 'मित्रावरुणयोः' 'विश्वेषाम्' 'अमूर्याः' इत्येषामापः।
(२५) 'हृदे त्वा' (२६) 'सोम राजन्' 'विश्वास्त्वाम्' इत्येषां सोमः, 'शृणोत्वग्निः' इत्यस्य लिङ्गोक्ता।
(२७) 'देवीरापः' इत्यस्यापः।
(२८) 'कार्षिरसि' इत्यस्याज्यम्, 'समुद्रस्य त्वा' 'समापो अद्भिः' इत्यनयोरापः।
(२९) 'यमग्ने' इत्यस्याग्निः।
(३०-३१) 'देवस्य त्वा' इत्यस्य सविता, 'आददे' इत्यस्य ग्रावा, 'निग्राभ्या स्थ' इत्यस्यापः।
(३२) 'इन्द्राय त्वा' इत्यादित्रयाणाम्, 'श्येनाय त्वा' 'अग्नये त्वा' (३३) 'यत्ते सोम' इत्येषाञ्च सोमः।
(३४) 'श्वात्रा स्थ' इत्यस्य निग्राभ्या आपः।
(३५) 'मा भेर्मा' इत्यस्य सोमः, 'धिषणे वीड्वी' इत्यस्य द्यावापृथिव्यौ।

(३६) 'प्रागपाक्' इत्यस्य सोमः ।
(३७) 'त्वमङ्ग' इत्यस्येन्द्रः ॥

छन्दः (३) 'या ते' इत्यस्य त्रिष्टुप्, (४) 'विष्णोः कर्माणि' (५) 'तद्विष्णोः' इत्यनयोर्गायत्री, (१७) 'इदमापः' इत्यस्य महापङ्क्तिः, (२०) 'देव त्वष्टः' इत्यस्य त्रिष्टुप्, (२२) 'यदाहुः' इत्यस्य गायत्री, (२३) 'हविष्मतीरिमाः' इत्यस्यानुष्टुप्, (२४) 'अमूर्याः' इत्यस्य गायत्री, (२५) 'हृदे त्वा' इत्यस्यानुष्टुप्, (२६) 'शृणोत्वग्निः' इत्यस्य त्रिष्टुप्, (२७) 'देवीरापः' इत्यस्य पङ्क्तिः, (२८) 'कार्षिरसि' इत्यादित्रयाणां मिलितानामनुष्टुप्, (२९) 'यमग्ने' इत्यस्य गायत्री, (३३) 'यत्ते सोम' इत्यस्य विपरीता बृहती, (३४) 'श्वात्रा स्थ' इत्यस्य पथ्याबृहती, (३६) 'प्रागपाक्' इत्यस्योष्णिक्, (३७) 'त्वमङ्ग' इत्यस्य पथ्याबृहती ॥

॥ हरिःॐ ॥

॥१॥ देवस्य त्वा सवितुः प्प्रसवेऽश्विनोर्ब्बाहुभ्याम्पूष्णो हस्ताभ्याम् । आददे नार्य्यसि-
सीदमहꣳ रक्षसाङ्ग्रीवाऽअपि कृन्तामि । यवोसि यवयास्म्मद्द्वेषो यवयारातीर्द्दिवे
त्वान्तरिक्क्षाय त्वा पृथिव्यै त्वा शुन्धन्ताँल्लोकाः पितृषदनाः पितृषदनमसि ॥१॥
अग्ग्रेणीरसि स्वावेशऽउन्नेतॄणामेतस्य वित्तादधि त्वा स्त्थास्यति देवस्त्वा सविता
मद्ध्वानक्तु सुपिप्पलाभ्यस्त्वौषधीभ्यः । द्यामग्ग्रेणास्पृक्क्षऽआन्तरिक्क्षम्मद्ध्येना-
प्प्राः पृथिवीमुपरेणादृꣳहीः ॥२॥
या ते धामान्न्युश्म्मसि गमद्ध्यै यत्र गावो भूरिश्शृङ्गाऽअयासः । अत्राह तदुरुगायस्य
व्विष्ण्णोः परमम्पदमव भारि भूरि । ब्रह्मवनि त्वा क्क्षत्रवनि रायस्पोषवनि पर्य्यू-
हामि । ब्रह्म दृꣳह क्क्षत्रन्दृꣳहायुर्दृꣳह प्प्रजान्दृꣳह ॥३॥
व्विष्ण्णोः कर्म्माणि पश्श्यत यतो व्व्रतानि पस्प्पशे । इन्द्रस्य युज्ज्यः सखा ॥४॥
तद्विष्ण्णोः परमम्पदꣳ सदा पश्श्यन्ति सूरयः । दिवीव चक्क्षुराततम् ॥५॥
परिवीरसि परि त्वा दैवीर्व्विशो व्ययन्ताम्परीमँय्यजमानꣳ रायो मनुष्ष्याणाम् ।
दिवः सूनुरस्येष ते पृथिव्याँल्लोकऽआरण्ण्यस्ते पशुः ॥६॥
॥२॥ उपावीरस्युप देवान्दैवीर्व्विशः प्प्रागुरुशिजो वह्नितमान् ।
देव त्वष्टर्व्वसु रम हव्या ते स्वदन्ताम् ॥७॥
रेवती रमद्ध्वम्बृहस्प्पते धारया वसूनि ।
ऋतस्य त्वा देवहविः पाशेन प्प्रतिमुञ्चामि धर्षा मानुषः ॥८॥
देवस्य त्वा सवितुः प्प्रसवेऽश्विनोर्ब्बाहुभ्याम्पूष्ण्णो हस्ताभ्याम् । अग्नीषोमा-
भ्याञ्जुष्टन्नियुनज्म्मि । अद्भ्यस्त्वौषधीभ्योनु त्वा माता मन्न्यतामनु पितानु
भ्राता सगभ्र्योनु सखा सयूत्थ्यः । अग्नीषोमाभ्यान्त्वा जुष्टम्प्रोक्क्षामि ॥९॥
अपाम्पेरुरस्यापो देवीः स्वदन्तु स्वात्तञ्चित्सद्देवहविः । सन्ते प्प्राणो वातेन गच्छताꣳ
समङ्गानि यजत्रैः सँय्यज्ज्ञपतिराशिषा ॥१०॥
घृतेनाक्तौ पशूँस्त्रायेथाꣳ रेवति यजमाने प्प्रियन्धाऽआविश । उरोरन्तरिक्क्षात्सजूर्द्दे-
वेन व्वातेनास्य हविषस्त्मना यज समस्य तन्न्वा भव । व्वर्षो व्वर्षीयसि यज्ज्ञे यज्ज्ञ-
पतिन्धाः स्वाहा देवेभ्यो देवेभ्यः स्वाहा ॥११॥
॥३॥ माहिर्भूर्म्मा पृदाकुर्न्नमस्तऽआतानानर्वा प्प्रेहि ।
घृतस्य कुल्ल्याऽउपऽऋतस्य पत्थ्याऽअनु ॥१२॥
देवीरापः शुद्धा वोढ्वꣳ सुपरिविष्टा देवेषु सुपरिविष्टा व्वयम्परिवेष्टारो भूयास्म ॥१३॥
व्वाचन्ते शुन्धामि प्प्राणन्ते शुन्धामि चक्क्षुस्ते शुन्धामि श्श्रोत्रन्ते शुन्धामि नाभिन्ते
शुन्धामि मेढ्रन्ते शुन्धामि पायुन्ते शुन्धामि चरित्राँस्ते शुन्धामि ॥१४॥
मनस्तऽआप्प्यायताँव्वाक्तऽआप्प्यायताम्प्राणस्तऽआप्प्यायताञ्चक्क्षुस्तऽआप्प्याय-
ताꣳ श्श्रोत्रन्तऽआप्प्यायताम् । यत्ते क्क्रूरँय्यदास्त्थितन्तत्तऽआप्प्यायतान्निष्ट्यायताम्-
यतान्तत्ते शुद्ध्यतु शमहोभ्यः । ओषधे त्रायस्व स्वधिते मैनꣳ हिꣳसीः ॥१५॥
रक्क्षसाम्भागोसि निरस्तꣳ रक्क्षऽइदमहꣳ रक्क्षोभि तिष्ठामीदमहꣳ रक्क्षोवबाध
ऽइदमहꣳ रक्क्षोधमन्तमो नयामि । घृतेन द्यावापृथिवी प्प्रोर्ण्णुवाथाँव्वायो वे स्तोका-
नामग्निराज्ज्यस्य वेतु स्वाहा स्वाहाकृतेऽऊर्द्ध्वनभसम्मारुतङ्गच्छतम् ॥१६॥
इदमापः प्प्रवहतावद्यञ्च मलञ्च यत् । यच्चाभिदुद्द्रोहानृतँय्यच्च शेपेऽअभीरुणम् ।
आपो मा तस्म्मादेनसः पवमानश्च मुञ्चतु ॥१७॥
॥४॥ सन्ते मनो मनसा सम्प्राणः प्प्राणेन गच्छताम् । रेडस्यग्निष्ट्वा श्श्रीणात्त्वापस्त्वा
समरिणन्वातस्य त्वा ध्राज्ज्यै पूष्ण्णो रꣳह्याऽऊष्म्मणो व्व्यथिषत्प्रयुतन्द्वेषः ॥१८॥
घृतङ्घृतपावानः पिबत वसाँव्वसापावानः पिबतान्तरिक्क्षस्य हविरसि स्वाहा ।
दिशः प्प्रदिशऽआदिशो व्विदिशऽउद्दिशो दिग्भ्यः स्वाहा ॥१९॥
ऐन्द्रः प्प्राणोऽअङ्गेऽअङ्गे निदीद्ध्यदैन्द्रऽउदानोऽअङ्गेऽअङ्गे निधीतः । देव त्वष्टर्भूरि
ते सꣳ समेतु सलक्ष्मा यद्विषुरूपम्भवाति । देवत्रा यन्तमवसे सखायोनु त्वा माता
पितरो मदन्तु ॥२०॥
॥५॥ समुद्रङ्गच्छ स्वाहान्तरिक्क्षङ्गच्छ स्वाहा देवꣳ सवितारङ्गच्छ स्वाहा मित्रावरुणौ
गच्छ स्वाहाहोरात्रे गच्छ स्वाहा च्छन्दाꣳसि गच्छ स्वाहा द्यावापृथिवी गच्छ
स्वाहा यज्ज्ञङ्गच्छ स्वाहा सोमङ्गच्छ स्वाहा दिव्व्यन्नभो गच्छ स्वाहाग्निँव्वैश्श्वानरङ्गच्छ

स्वाहा मनो मे हार्द्दिं यच्छ दिवन्ते धूमो गच्छतु स्वुर्ज्ज्योतिः पृथिवीम्भस्म्मनापृण
स्वाहा ॥२१॥
मापो मौषधीर्हिँꣳसीर्द्धाम्म्नोधाम्म्नो राजँस्ततो वरुण नो मुञ्च । यदाहुरग्घ्न्याऽइति
वरुणेति शपामहे ततो वरुण नो मुञ्च । सुमित्रिया नऽआपऽओषधयः सन्तु दुर्म्मित्रि-
यास्तस्म्मै सन्तु योस्म्मान्द्वेष्टि यञ्च वयन्द्विष्म्मः ॥२२॥
॥६॥ हविष्म्मतीरिमाऽआपो हविष्म्माँ२ऽआविवासति ।
हविष्म्मान्देवोऽअद्ध्वरो हविष्म्माँ२ऽअस्तु सूर्य्यः ॥२३॥
अग्नेर्वोपन्नगृहस्य सदसि सादयामीन्द्राग्ग्न्योर्भागधेयी स्थ मित्रावरुणयोर्भ्भाग-
धेयी स्थ विश्श्वेषान्देवानाम्भागधेयी स्थ । अमूर्य्याऽउप सूर्य्ये याभिर्वा सूर्य्यः
सह । ता नो हिन्न्वन्त्वद्ध्वरम् ॥२४॥
॥७॥ हृदे त्वा मनसे त्वा दिवे त्वा सूर्य्याय त्वा ।
ऊर्द्ध्वमिममद्ध्वरन्दिवि देवेषु होत्रा यच्छ ॥२५॥
सोम राजन्विश्श्वास्त्वम्प्रजाऽउपावरोह विश्श्वास्त्वाम्प्रजाऽउपावरोहन्तु । शृणो-
त्वग्निः समिधा हवम्मे शृण्वन्त्वापो धिषणाश्च देवीः । श्रोता ग्ग्रावाणो विदुषो
न यज्ञꣳ शृणोतु देवः सविता हवम्मे स्वाहा ॥२६॥
देवीरापोऽअपान्नपाद्यो वऽऊर्म्मिर्हविष्यऽइन्द्रियावान्मदिन्तमः ।
तन्देवेब्भ्यो देवत्रा दत्त शुक्रपेब्भ्यो येषाम्भाग स्थ स्वाहा ॥२७॥
कार्षिरसि समुद्रस्य त्वा क्षित्त्याऽउन्नयामि ।
समापोऽअद्भिरग्ग्मत समोषधीभिरोषधीः ॥२८॥
यमग्ने पृत्सु मर्त्यमवा वाजेषु यञ्जुनाः । स यन्ता शश्श्वतीरिषः स्वाहा ॥२९॥
॥८॥ देवस्य त्वा सवितुः प्प्रसवेश्श्विनोर्ब्बाहुब्भ्याम्पूष्णो हस्ताब्भ्याम् । आददे रावासि
गभीरमिममद्ध्वरङ्कृधीन्द्राय सुषूतमम् । उत्तमेन पविनोर्ज्जस्वन्तम्मधुमन्तम्पयस्वन्त-
न्निग्ग्राब्भ्या स्थ देवश्श्रुतस्तर्प्पयत मा मनो मे ॥३०॥
मनो मे तर्प्पयत वाचम्मे तर्प्पयत प्प्राणम्मे तर्प्पयत चक्क्षुर्म्मे तर्प्पयत श्श्रोत्रम्मे
तर्प्पयतात्त्मानम्मे तर्प्पयत प्प्रजाम्मे तर्प्पयत पशूनमे तर्प्पयत गणान्मे तर्प्पयत
गणा मे मा वितृषन् ॥३१॥
इन्द्राय त्वा वसुमते रुद्रवतऽइन्द्राय त्वादित्त्यवतऽइन्द्राय त्वाभिमातिग्घ्ने ।
श्येनाय त्वा सोमभृतेग्नये त्वा रायस्प्पोषदे ॥३२॥

यत्ते सोम दिवि ज्ज्योतिर्य्यत्पृथिव्याँय्यदुरावन्तरिक्षे ।
तेनास्म्मै यजमानायोरु राये कृद्ध्यधि दात्रे वोचः ॥३३॥
श्वात्रा स्त्थ वृत्रतुरो राधोगूर्त्ताऽअमृतस्य पत्नीः । ता देवीर्द्देवत्रेमँय्यज्ञन्नयतोप-
हूताः सोमस्य पिबत ॥३४॥
मा भेर्म्मा सँविक्क्थाऽऊर्ज्जन्धत्स्व धिषणे वीड्वी सती वीडयेथामूर्ज्जन्दधाथाम् ।
पाप्प्मा हतो न सोमः ॥३५॥
प्रागपागुदगधराक्सर्वतस्त्वा दिशऽआधावन्तु । अम्ब निष्प्पर समरीर्विदाम् ॥३६॥
त्वमङ्ग प्प्रशꣳसिषो देवः शविष्ठ मर्त्यम् । न त्वदन्न्यो मघवन्नस्ति मर्डितेन्द्र
ब्रवीमि ते वचः ॥३७॥

॥ इति षष्ठोऽध्यायः ॥

---

# अथ सप्तमोऽध्यायः

**ऋषिः**(१) 'वाचस्पतये' इत्यारभ्य (४८) 'कोदात्' इत्यन्तानां सामान्यतः प्रजापतिर्ऋषिः । विशेषतश्च—
(७) 'आ वायो' इत्यस्य वसिष्ठः, (८) 'इन्द्रवायू' इत्यस्य मधुच्छन्दाः, (९) 'अयं वाम्' इत्यस्य गृत्समदः, (१०) 'राया वयम्' इत्यस्य त्रसदस्युः, (११) 'या वाम्' इत्यस्य मेधातिथिः, (१२) 'तम्प्रत्नथा' इत्यस्य काश्यपोऽवत्सारः, (१९) 'ये देवासः' इत्यस्य परुच्छेपः, (२४) 'मूर्धानन्दिवः' इत्यस्य भरद्वाजः, (२६) 'यस्ते द्रप्सः' इत्यस्य देवश्रवाः, (३१) 'इन्द्राग्नी' इत्यस्य विश्वामित्रः, (३२) 'आ घा ये' इत्यस्य त्रिशोकः, (३३) 'ओमासश्चर्षणीधृतः' इत्यस्य मधुच्छन्दाः, (३४) 'विश्वे देवासः' इत्यस्य गृत्समदः, (३५) 'इन्द्र मरुत्वः' (३६) 'मरुत्वन्तं वृषभम्' (३७) 'सजोषा इन्द्र' (३८) 'मरुत्वाँ इन्द्र' इत्येषां विश्वामित्रः, (३९) 'महाँ इन्द्रो नृवत्' इत्यस्य भरद्वाजः, (४०) 'महाँ इन्द्रो यः' इत्यस्य वत्सः, (४१) 'उदु त्यम्' इत्यस्य प्रस्कण्वः, (४२) 'चित्रन्देवानाम्' इत्यस्याङ्गिरसः कुत्सः, (४३) 'अग्ने नय' इत्यस्यागस्त्यः ॥

**देवता**(१) 'वाचस्पतये' इत्यस्य प्राणः ।
(२) 'मधुमतीर्नः' 'स्वाहा' 'उर्वन्तरिक्षम्' इत्येषां लिङ्गोक्ताः, 'यत्ते सोम' इत्यस्य सोमः ।
(३) 'स्वाङ्कृतोसि' इत्यस्योपांशुग्रहः, 'देवेभ्यस्त्वा' इत्यस्य देवाः, 'देवांशो यस्मै' इत्यस्य लिङ्गोक्ता, 'प्राणाय त्वा' इत्यस्योपांशुग्रहः, 'व्यानाय त्वा' इत्यस्योपांशुसवनः ।
(४) 'उपयामगृहीतः' इत्यस्येन्द्रः ।
(५) 'अन्तस्ते' इत्यस्य मघवा ।
(६) 'स्वाङ्कृतोसि' इत्यस्योपांशुग्रहः, 'देवेभ्यस्त्वा' इत्यस्य देवाः, 'उदानाय त्वा' इत्यस्योपांशुग्रहः ।
(७) 'आ वायो' 'वायवे त्वा' इत्यनयोर्वायुः ।
(८) 'इन्द्रवायू' 'उपयामगृहीतः' 'एष ते योनिः' इत्येषामिन्द्रवायू ।
(९) 'अयं वाम्' 'उपयामगृहीतः' इत्यनयोर्मित्रावरुणौ ।
(१०) 'राया वयम्' 'एष ते योनिः' इत्यनयोर्मित्रावरुणौ ।
(११) 'या वाम्' 'उपयामगृहीतः' 'एष ते योनिः' इत्येषामश्विनौ ।

(१२) 'तम्प्रत्नथा' इत्यस्य विश्वे देवाः, 'उपयामगृहीतः' 'एष ते योनिः' इत्यनयोः शुक्रग्रहः, 'अपमृष्टः शण्डः' इत्यस्य शण्डः, 'देवास्त्वा शुक्रपाः' इत्यस्य शुक्रः, 'अनाधृष्टासि' इत्यस्य वेदिश्रोणी ।

(१३) 'सुवीरो वीरान्' 'सञ्जग्मानः' इत्यनयोः शुक्रः, 'निरस्तः शण्डः' इत्यस्य शण्डः, 'शुक्रस्याधिष्ठानम्' इत्यस्य शकलम् ।

(१४-१५) 'अच्छिन्नस्य ते' इत्यस्य सोमः, 'सा प्रथमा' इत्यस्येन्द्रः, 'तृम्पन्तु होत्राः' 'अयाडग्नीत्' इत्यनयोर्लिङ्गोक्ताः ।

(१६) 'अयं वेनः' 'उपयामगृहीतः' इत्यनयोः सोमः ।

(१७) 'मनो न' इत्यस्य सोमः, 'एष ते योनिः' इत्यस्य मन्थिग्रहः, 'अपमृष्टो मर्कः' इत्यस्य मर्कः, 'देवास्त्वा मन्थिपाः' इत्यस्य मन्थिग्रहः, 'अनाधृष्टासि' इत्यस्य वेदिश्रोणी ।

(१८) 'सुप्रजाः प्रजाः' 'सञ्जग्मानः' इत्यनयोर्मन्थिग्रहः, 'निरस्तो मर्कः' इत्यस्य मर्कः, 'मन्थिनोधिष्ठानम्' इत्यस्य शकलम् ।

(१९) 'ये देवासः' इत्यस्य विश्वे देवाः ।

(२०) 'उपयामगृहीतोस्याग्रयणः' इत्यस्याग्रयणः ।

(२१) 'सोमः पवते' इत्यस्य विश्वे देवाः, 'एष ते योनिः' इत्यस्याग्रयणः ।

(२२) 'उपयामगृहीतः' 'एष ते योनिः' 'देवेभ्यस्त्वा' इत्येषां सोमः ।

(२३) 'मित्रावरुणाभ्यान्त्वा' इत्यस्य सोमः, 'इन्द्राय त्वा' 'इन्द्राग्निभ्यान्त्वा' 'इन्द्रावरुणाभ्यान्त्वा' 'इन्द्राबृहस्पतिभ्यान्त्वा' 'इन्द्राविष्णुभ्यान्त्वा' इत्येषां लिङ्गोक्ताः ।

(२४) 'मूर्धानन्दिवः' इत्यस्य वैश्वानरः ।

(२५) 'उपयामगृहीतः' इत्यस्य सोमः, 'ध्रुवोसि' इत्यस्य ध्रुवः, 'एष ते योनिः' इत्यस्य ग्रहः, 'ध्रुवन्ध्रुवेण' इत्यस्य ध्रुवः, 'अथा न इन्द्रः' इत्यस्येन्द्रः ।

(२६) 'यस्ते द्रप्सः' इत्यस्य सोमः, 'देवानामुत्क्रमणमसि' इत्यस्य चात्वालः ।

(२७) 'प्राणाय मे' 'व्यानाय मे' 'उदानाय मे' 'वाचे मे' 'क्रतूदक्षाभ्याम्मे' 'श्रोत्राय मे' 'चक्षुर्भ्याम्मे' (२८) 'आत्मने मे' 'ओजसे मे' 'आयुषे मे' 'विश्वाभ्यो मे' इत्येषां लिङ्गोक्ताः ।

(२९) 'कोसि' इत्यस्य प्रजापतिः, 'भूर्भुवः स्वः' इत्यस्याग्निवायुसूर्याः ।

(३०) 'उपयामगृहीतोसि मधवे त्वा' 'उप० माधवाय त्वा' 'उप० शुक्राय त्वा' 'उप० शुचये त्वा' 'उप० नभसे त्वा' 'उप० नभस्याय त्वा' 'उप० इषे त्वा' 'उप० ऊर्जे त्वा' 'उप० सहसे त्वा' 'उप० सहस्याय त्वा' 'उप० तपसे त्वा' 'उप० तपस्याय त्वा' 'उप० अंहसस्पतये त्वा' इत्येषां लिङ्गोक्ताः ।

(३१) 'इन्द्राग्नी' इत्यस्येन्द्राग्नी, 'उपयामगृहीतः' 'एष ते योनिः' इत्यनयोः सोमः ।

(३२) 'आ घा ये' इत्यस्याग्नीन्द्रौ, 'उपयामगृहीतः' 'एष ते योनिः' इत्यनयोः सोमः ।

(३३) 'ओमासश्चर्षणीधृतः' इत्यस्य विश्वे देवाः, 'उपयामगृहीतः' 'एष ते योनिः' इत्यनयोः सोमः ।

(३४) 'विश्वे देवासः' इत्यस्य विश्वे देवाः, 'उपयामगृहीतः' 'एष ते योनिः' इत्यनयोः सोमः ।

(३५) 'इन्द्र मरुत्वः' इत्यस्येन्द्रामरुतौ, 'उपयामगृहीतः' 'एष ते योनिः' इत्यनयोः सोमः ।

(३६) 'मरुत्वन्तं वृषभम्' इत्यस्येन्द्रामरुतौ, 'उपयामगृहीतः' 'एष ते योनिः' इत्यनयोः सोमः, 'उपयामगृहीतः' इत्यस्य मरुत्वान् ।

(३७) 'सजोषा इन्द्र' इत्यस्येन्द्रामरुतौ, 'उपयामगृहीतः' 'एष ते योनिः' इत्यनयोः सोमः ।

(३८) 'मरुत्वाँ इन्द्र' इत्यस्येन्द्रामरुतौ, 'उपयामगृहीतः' 'एष ते योनिः' इत्यनयोः सोमः ।

(३९) 'महाँ इन्द्रो नृवत्' इत्यस्य माहेन्द्रः, 'उपयामगृहीतः' 'एष ते योनिः' इत्यनयोर्ग्रहः ।

(४०) 'महाँ इन्द्रो यः' इत्यस्य माहेन्द्रः, 'उपयामगृहीतः' 'एष ते योनिः' इत्यनयोर्ग्रहः ।

(४१) 'उदु त्यम्' (४२) 'चित्रन्देवानाम्' इत्यनयोः सूर्यः ।

(४३) 'अग्ने नय' (४४) 'अयन्नः' इत्यनयोरग्निः ।

(४५) 'रूपेण वः' 'ऋतस्य पथा' 'वि स्वः पश्य' 'यतस्व' इत्येषां दक्षिणा ।

(४६) 'ब्राह्मणमद्य' इत्यस्य ब्राह्मणः, 'अस्मद्राता' इत्यस्य दक्षिणा ।

(४७) 'अग्नये त्वा' इत्यस्य हिरण्यम्, 'रुद्राय त्वा' इत्यस्य गौः, 'बृहस्पतये त्वा' इत्यस्य वासः, 'यमाय त्वा' इत्यस्याश्वः ।

(४८) 'कोदात्' इत्यस्य कामः ॥

छन्दः (१) 'वाचस्पतये' इत्यस्य विराट्, (५) 'अन्तस्ते' (७) 'आ वायो' इत्यनयोस्त्रिष्टुप्, (८) 'इन्द्रवायू' (९) 'अयं वाम्' इत्यनयोर्गायत्री, (१०) 'राया वयम्' इत्यस्य त्रिष्टुप्, (११) 'या वाम्' इत्यस्य गायत्री, (१२) 'तम्प्रत्नथा' इत्यस्य जगती, (१४) 'सा प्रथमा' 'तृम्पन्तु' इत्यनयोस्त्रिष्टुप्, 'अयाडग्नीत्' इत्यस्य दैवी बृहती, (१६) 'अयं वेनः' (१७) 'मनो न येषु' (१९) 'ये देवासः' (२४) 'मूर्धानन्दिवः' इत्येषां त्रिष्टुप्, (२५) 'ध्रुवन्ध्रुवेण' इत्यस्य बृहती, (२६) 'यस्ते द्रप्सः' इत्यस्य त्रिष्टुप्, 'स्वाहा' इति यजुः, (२९) 'कोसि कतमः' इत्यस्य वर्द्धमानोष्णिक्, (३१) 'इन्द्राग्नी' (३२) 'आ घा ये' (३३) 'ओमासश्चर्षणीधृतः' (३४) 'विश्वे देवासः' इत्येषां गायत्री, (३५) 'इन्द्र मरुत्वः' (३६) 'मरुत्वन्तं वृषभम्' इत्यनयोस्त्रिष्टुप्, 'मरुतान्त्वौजसे' इति यजुः, (३७) 'सजोषा इन्द्र' (३८) 'मरुत्वाँ इन्द्र' (३९) 'महाँ इन्द्रो नृवत्' इत्येषां त्रिष्टुप्, (४०) 'महाँ इन्द्रो यः' (४१) 'उदु त्यम्' इत्यनयोर्गायत्री, (४२) 'चित्रन्देवानाम्' (४३) 'अग्ने नय' (४४) 'अयन्नः' इत्येषां त्रिष्टुप्, 'स्वाहा' इति यजुः ॥

॥ हरिः ॐ ॥

॥१॥ वाचस्पतये पवस्व वृष्णोऽअꣳशुभ्याङ्गभस्तिपूतः । देवो देवेभ्यः पवस्व
येषाम्भागोसि ॥१॥
मधुमतीर्नऽइषस्कृधि यत्ते सोमादाभ्यन्नाम जागृवि तस्मै ते सोम सोमाय
स्वाहा स्वाहोर्वन्तरिक्षमन्वेमि स्वाङ्कृतोसि ॥२॥
स्वाङ्कृतोसि विश्वेभ्यऽइन्द्रियेभ्यो दिव्येभ्यः पार्थिवेभ्यो मनस्त्वाष्टु स्वाहा
त्वा सुभव सूर्याय देवेभ्यस्त्वा मरीचिपेभ्यो देवांꣳशो यस्मै त्वेडे तत्सत्यमु-
परिप्रुता भङ्गेन हतोसौ फट्प्राणाय त्वा व्यानाय त्वा ॥३॥
॥२॥ उपयामगृहीतोस्यन्तर्यच्छ मघवन्पाहि सोमम् । उरुष्य रायऽएषो यजस्व ॥४॥
अन्तस्ते द्यावापृथिवी दधाम्यन्तर्दधाम्युर्वन्तरिक्षम् । सजूर्देवेभिरवरैः परैश्चा-
न्तर्यामे मघवन्मादयस्व ॥५॥
स्वाङ्कृतोसि विश्वेभ्यऽइन्द्रियेभ्यो दिव्येभ्यः पार्थिवेभ्यो मनस्त्वाष्टु स्वाहा त्वा
सुभव सूर्याय देवेभ्यस्त्वा मरीचिपेभ्यऽउदानाय त्वा ॥६॥
॥३॥ आ वायो भूष शुचिपाऽउप नः सहस्रन्ते नियुतो विश्ववार । उपो तेऽअन्धो मद्य-
मयामि यस्य देव दधिषे पूर्वपेयँवायवे त्वा ॥७॥
इन्द्रवायूऽइमे सुताऽउप प्रयोभिरागतम्। इन्दवो वामुशन्ति हि। उपयामगृहीतोसि
वायवऽइन्द्रवायुभ्यान्त्वैष ते योनिः सजोषोभ्यान्त्वा ॥८॥
॥४॥ अयँवाम्मित्रावरुणा सुतः सोमऽऋतावृधा। ममेदिह श्रुतꣳ हवम् । उपयामगृही-
तोसि मित्रावरुणाभ्यान्त्वा ॥९॥

राया वयꣳ ससवाꣳसो मदेम हव्येन देवा यवसेन गावः । तान्धेनुम्मित्रावरुणा
युवन्नो विश्वाहा धत्तमनपस्फुरन्तीमेष ते योनिर्ऋतायुभ्यान्त्वा ॥१०॥
॥५॥ या वाङ्कशा मधुमत्यश्विना सूनृतावती । तया यज्ञम्मिमिक्षतम् । उपयामगृही-
तोस्यश्विभ्यान्त्वैष ते योनिर्म्माध्वीभ्यान्त्वा ॥११॥
॥६॥ तम्प्रत्नथा पूर्वथा विश्वथेमथा ज्येष्ठतातिम्बर्हिषदꣳ स्वर्विदम् । प्रतीचीनँवृज-
नन्दोहसे धुनिमाशुञ्जयन्तमनु यासु वर्द्धसे । उपयामगृहीतोसि शण्डाय त्वैष ते योनि-
र्वीरताम्पाह्यपमृष्टः शण्डो देवास्त्वा शुक्रपाः प्रणयन्त्वनाधृष्टासि ॥१२॥
सुवीरो वीरान्प्रजनयन्परीह्यभि रायस्पोषेण यजमानम् । सञ्जग्मानो दिवा पृथिव्या
शुक्रः शुक्रशोचिषा निरस्तः शण्डः शुक्रस्याधिष्ठानमसि ॥१३॥
अच्छिन्नस्य ते देव सोम सुवीर्य्यस्य रायस्पोषस्य ददितारः स्याम । सा प्रथमा
सँस्कृतिर्विश्ववारा स प्रथमो वरुणो मित्रोऽअग्निः ॥१४॥
स प्रथमो बृहस्पतिश्चिकित्वाँस्तस्माऽइन्द्राय सुतमा जुहोत स्वाहा । तृम्पन्तु होत्रा
मध्वो याः स्विष्टा याः सुप्रीताः सुहुता यत्स्वाहायाडग्नीत् ॥१५॥
॥७॥ अयँवेनश्चोदयत्पृश्निगर्भा ज्योतिर्जरायू रजसो विमाने । इममपाꣳ सङ्गमे सूर्य्यस्य
शिशुन्न विप्रा मतिभी रिहन्ति । उपयामगृहीतोसि मर्काय त्वा ॥१६॥
मनो न येषु हवनेषु तिग्मँविपः शच्या वनुथो द्रवन्ता । आ यः शर्य्याभिस्तुवि-
नृम्णोऽअस्याश्रीणीतादिशङ्गभस्तावेष ते योनिः प्रजाः पाह्यपमृष्टो मर्को देवा-
स्त्वा मन्थिपाः प्रणयन्त्वनाधृष्टासि ॥१७॥
सुप्रजाः प्रजाः प्रजनयन्परीह्यभि रायस्पोषेण यजमानम् । सञ्जग्मानो दिवा
पृथिव्या मन्थी मन्थिशोचिषा निरस्तो मर्को मन्थिनोधिष्ठानमसि ॥१८॥
॥८॥ ये देवासो दिव्येकादश स्थ पृथिव्यामध्येकादश स्थ । अप्सुक्षितो महिनैकादश
स्थ ते देवासो यज्ञमिमञ्जुषध्वम् ॥१९॥
उपयामगृहीतोस्याग्रयणोसि स्वाग्रयणः । पाहि यज्ञम्पाहि यज्ञपतिँविष्णुस्त्वा-
मिन्द्रियेण पातु विष्णुन्त्वम्पाह्यभि सवनानि पाहि ॥२०॥
सोमः पवते सोमः पवतेस्मै ब्रह्मणेस्मै क्षत्रायास्मै सुन्वते यजमानाय पव-
तऽइषऽऊर्ज्जे पवतेद्भ्यऽओषधीभ्यः पवते द्यावापृथिवीभ्याम्पवते सुभूताय पवते
विश्वेभ्यस्त्वा देवेभ्यऽएष ते योनिर्विश्वेभ्यस्त्वा देवेभ्यः ॥२१॥
॥९॥ उपयामगृहीतोसीन्द्राय त्वा बृहद्वते वयस्वतऽउक्थाव्यङ्गृह्णामि । यत्तऽइन्द्र बृहद्वय-
स्तस्मै त्वा विष्णवे त्वैष ते योनिरुक्थेभ्यस्त्वा देवेभ्यस्त्वा देवाव्यँयज्ञस्यायुषे
गृह्णामि मित्रावरुणाभ्यान्त्वा ॥२२॥
मित्रावरुणाभ्यान्त्वा देवाव्यँयज्ञस्यायुषे गृह्णामीन्द्राय त्वा देवाव्यँयज्ञस्यायुषे
गृह्णामीन्द्राग्निभ्यान्त्वा देवाव्यँयज्ञस्यायुषे गृह्णामीन्द्रावरुणाभ्यान्त्वा देवाव्यँ-
यज्ञस्यायुषे गृह्णामीन्द्राबृहस्पतिभ्यान्त्वा देवाव्यँयज्ञस्यायुषे गृह्णामीन्द्रा-
विष्णुभ्यान्त्वा देवाव्यँयज्ञस्यायुषे गृह्णामि ॥२३॥
॥१०॥ मूर्द्धानन्दिवोऽअरतिम्पृथिव्या वैश्वानरमृतऽआजातमग्निम् ।
कविꣳ सम्राजमतिथिञ्जनानामासन्ना पात्रञ्जनयन्त देवाः ॥२४॥
उपयामगृहीतोसि ध्रुवोसि ध्रुवक्षितिर्ध्रुवाणान्ध्रुवतमोच्युतानामच्युतक्षित्तमऽएष
ते योनिर्वैश्वानराय त्वा । ध्रुवन्ध्रुवेण मनसा वाचा सोममवनयामि । अथा नऽइन्द्र
ऽइद्विशोसपत्नाः समनसस्करत् ॥२५॥
॥११॥ यस्ते द्रप्स स्कन्दति यस्तेऽअꣳशुर्ग्रावच्युतो धिषणयोरुपस्थात् ।
अध्वर्य्योर्वा परि वा यः पवित्रात्तन्ते जुहोमि मनसा वषट्कृतꣳ स्वाहा देवाना-
मुत्क्रमणमसि ॥२६॥
॥१२॥ प्राणाय मे वर्च्चोदा वर्च्चसे पवस्व व्यानाय मे वर्च्चोदा वर्च्चसे पवस्वोदानाय मे वर्च्चोदा
वर्च्चसे पवस्व वाचे मे वर्च्चोदा वर्च्चसे पवस्व क्रतूदक्षाभ्याम्मे वर्च्चोदा वर्च्चसे पवस्व
श्रोत्राय मे वर्च्चोदा वर्च्चसे पवस्व चक्षुर्भ्याम्मे वर्च्चोदसौ वर्च्चसे पवेथामात्मने
मे ॥२७॥
आत्मने मे वर्च्चोदा वर्च्चसे पवस्वौजसे मे वर्च्चोदा वर्च्चसे पवस्वायुषे मे वर्च्चोदा
वर्च्चसे पवस्व विश्वाभ्यो मे प्रजाभ्यो वर्च्चोदसौ वर्च्चसे पवेथाम् ॥२८॥
कोसि कतमोसि कस्यासि को नामासि । यस्य ते नामामन्महि यन्त्वा सोमेना-
तीतृपाम । भूर्भुवः स्वः सुप्रजाः प्रजाभिः स्याꣳ सुवीरो वीरैः सुपोषः
पोषैः ॥२९॥
॥१३॥ उपयामगृहीतोसि मधवे त्वोपयामगृहीतोसि माधवाय त्वोपयामगृहीतोसि शुक्राय
त्वोपयामगृहीतोसि शुचये त्वोपयामगृहीतोसि नभसे त्वोपयामगृहीतोसि
नभस्याय त्वोपयामगृहीतोसीषे त्वोपयामगृहीतोस्यूर्ज्जे त्वोपयामगृहीतोसि सहसे
त्वोपयामगृहीतोसि सहस्याय त्वोपयामगृहीतोसि तपसे त्वोपयामगृहीतोसि तपस्याय
त्वोपयामगृहीतोस्यꣳहसस्पतये त्वा ॥३०॥

॥१४॥ इन्द्राग्ग्नीऽआगतꣳ सुतङ्गीर्ब्भिर्न्नभो व्वरेण्ण्यम् । अस्य पातन्धियेषिता । उपयाम-
गृहीतोसीन्द्राग्ग्निब्भ्यान्त्वैष ते योनिरिन्द्राग्ग्निब्भ्यान्त्वा ॥३१॥
॥१५॥ आ घा येऽअग्ग्निमिन्धते स्तृणन्ति बर्हिरानुषक् । येषामिन्द्रो युवा सखा । उपया-
मगृहीतोस्यग्ग्नीन्द्राब्भ्यान्त्वैष ते योनिरग्ग्नीन्द्राब्भ्यान्त्वा ॥३२॥
॥१६॥ ओमासश्चर्षणीधृतो व्विश्श्वे देवासऽआगत । दाश्श्वाꣳसो दाशुषं÷ सुतम् । उप-
यामगृहीतोसि विश्श्वेब्भ्यस्त्वा देवेब्भ्यऽएष ते योनिर्व्विश्श्वेब्भ्यस्त्वा देवेब्भ्यं÷ ॥३३॥
॥१७॥ विश्श्वे देवासऽआगत श्शृणुता मऽइमꣳ हवम् । एदम्बर्हिर्न्निषीदत । उपयामगृही-
तोसि व्विश्श्वेब्भ्यस्त्वा देवेब्भ्यऽएष ते योनिर्व्विश्श्वेब्भ्यस्त्वा देवेब्भ्यं÷ ॥३४॥
॥१८॥ इन्द्र मरुत्त्वऽइह पाहि सोमँय्यथा शार्य्यातेऽअपिबः सुतस्य । तव प्प्रणीती तव शूर
शर्म्मन्नाविवासन्ति कवयं÷ सुयज्ज्ञाः । उपयामगृहीतोसीन्द्राय त्वा मरुत्त्वतऽएष
ते योनिरिन्द्राय त्वा मरुत्त्वते ॥३५॥
॥१९॥ मरुत्त्वन्तँव्वृषभँव्वावृधानमकवारिन्दिव्यꣳ शासमिन्द्रम् । व्विश्श्वासाहमवसे नूतना-
योग्ग्रꣳ सहोदामिह तꣳ हुवेम । उपयामगृहीतोसीन्द्राय त्वा मरुत्त्वतऽएष ते योनि-
रिन्द्राय त्वा मरुत्त्वते ।
॥२०॥ उपयामगृहीतोसि मरुतान्त्वौजसे ॥३६॥
॥२१॥ सजोषाऽइन्द्र सगणो मरुद्भिः सोमम्पिब वृत्रहा शूर व्विद्वान् । जहि शत्रूँ॥रप मृधो
नुदस्वाथाभयङ्कृणुहि व्विश्श्वतो नः । उपयामगृहीतोसीन्द्राय त्वा मरुत्त्वतऽएष ते
योनिरिन्द्राय त्वा मरुत्त्वते ॥३७॥
॥२२॥ मरुत्त्वाँ॥ऽइन्द्र वृषभो रणाय पिबा सोममनुष्ष्वधम्मदाय । आसिञ्चस्व जठरे मद्ध्व
ऽऊर्म्मिन्त्वꣳ राजासि प्प्रतिपत्त्सुतानाम् । उपयामगृहीतोसीन्द्राय त्वा मरुत्त्वतऽएष
ते योनिरिन्द्राय त्वा मरुत्त्वते ॥३८॥
॥२३॥ महाँ॥ऽइन्द्रो नृवदाचर्षणिप्प्राऽउत द्विबर्हाऽअमिनः सहोभिः । अस्म्मद्र्यग्ग्वा-
वृधे व्वीर्य्यायोरुः पृथुः सुकृतः कर्तृभिर्ब्भूत् । उपयामगृहीतोसि महेन्द्राय त्वैष ते
योनिर्म्महेन्द्राय त्वा ॥३९॥
॥२४॥ महाँ॥ऽइन्द्रो यऽओजसा पर्ज्जन्यो वृष्टिमाँ॥ऽइव । स्तोमैर्व्वत्सस्य वावृधे । उपया-
मगृहीतोसि महेन्द्राय त्वैष ते योनिर्म्महेन्द्राय त्वा ॥४०॥
॥२५॥ उदु त्यञ्जातवेदसन्देवँव्वहन्ति केतवं÷ । दृशे विश्श्वाय सूर्य्यꣳ स्वाहा ॥४१॥
चित्रन्देवानामुदगादनीकञ्चक्षुर्म्मित्रस्य व्वरुणस्याग्ग्नेः ।
आप्प्रा द्यावापृथिवीऽअन्तरिक्षꣳ सूर्य्यऽआत्त्मा जगतस्त्तस्थुषश्च स्वाहा ॥४२॥
अग्ग्ने नय सुपथा रायेऽअस्म्मान्विश्श्वानि देव व्वयुनानि व्विद्वान् ।
युयोद्ध्यस्म्मज्जुहुराणमेनो भूयिष्ठान्ते नमऽउक्तिँव्विधेम स्वाहा ॥४३॥
अयन्नोऽअग्ग्निर्व्वरिवस्कृणोत्त्वयम्मृधं÷ पुरऽएतु प्प्रभिन्दन् ।
अयँव्वाजाञ्जयतु व्वाजसाताव्वयꣳ शत्रूञ्जयतु जर्हृषाणः स्वाहा ॥४४॥
रूपेण वो रूपमब्भ्यागान्तुथो वो व्विश्श्ववेदा व्विभजतु ।
ऋतस्य पथा प्प्रेत चन्द्रदक्क्षिणा व्वि स्वः पश्श्य व्व्यन्तरिक्षँय्यतस्व सदस्यैं÷ ॥४५॥
ब्राह्मणमद्य व्विदेयम्पितृमन्तम्पैतृमत्त्यमृषिमार्षेयꣳ सुधातुदक्क्षिणम् ।
अस्म्मद्राता देवत्रा गच्छत प्प्रदातारमाविशत ॥४६॥
अग्ग्नये त्वा मह्यँव्वरुणो ददातु सोमृतत्त्वमशीयायुर्द्दात्रऽएधि मयो मह्यम्प्रतिग्ग्रहीत्रे
रुद्राय त्वा मह्यँव्वरुणो ददातु सोमृतत्त्वमशीय प्प्राणो दात्रऽएधि व्वयो मह्यम्प्र-
तिग्ग्रहीत्रे बृहस्प्पतये त्वा मह्यँव्वरुणो ददातु सोमृतत्त्वमशीय त्वग्ग्दात्रऽएधि मयो
मह्यम्प्रतिग्ग्रहीत्रे यमाय त्वा मह्यँव्वरुणो ददातु सोमृतत्त्वमशीय हयो दात्रऽएधि
व्वयो मह्यम्प्रतिग्ग्रहीत्रे ॥४७॥
कोदात्त्कस्म्माऽअदात्त्कामोदात्त्कामायादात् ।
कामो दाता कामं÷ प्प्रतिग्ग्रहीता कामैतत्ते ॥४८॥

॥ इति सप्तमोऽध्यायः ॥

# अथाष्टमोऽध्यायः

ऋषिः (१) 'उपयामगृहीतोसि' इत्यारभ्य (३२) 'मही द्यौः' इत्यन्तानां सामान्यतः प्रजापतिर्ऋषिः । विशेषतश्च—
(४) 'यज्ञो देवानाम्' इत्यस्य कुत्सः, (६) 'वाममद्य' इत्यस्य बार्हस्पत्यो भरद्वाजः, (१५) 'समिन्द्र णः' इत्यस्यात्रिः, (२१) 'देवा गातुविदः' इत्यस्य मनसस्पतिः, (२३) 'उरुꣳ हि राजा' इत्यस्य शुनःशेपः, (३१) 'मरुतो यस्य' इत्यस्य गोतमः, (३२) 'मही द्यौः' इत्यस्य मेधातिथिः ।
(३३) 'आतिष्ठ वृत्रहन' इत्यस्य गोतमः, (३४) 'युक्ष्वा हि' इत्यस्य मधुच्छन्दाः, (३५) 'इन्द्रमिद्धरी' इत्यस्य गोतमः, (३६) 'यस्मान्न जातः' (३७) 'इन्द्रश्च सम्राट्' इत्यनयोर्विवस्वान्, (३८) 'अग्ने पवस्व' इत्यस्य वैखानसः, (३९) 'उत्तिष्ठन्नोजसा' इत्यस्य कुरुस्तुतिः, (४०) 'अद्दश्रमस्य' इत्यस्य प्रस्कण्वः, (४१) 'उदु त्यम्' इत्यस्य देवाः, (४२) 'आजिघ्र कलशम्' (४३) 'इडे रन्ते' इत्यनयोः कुसुरुबिन्दुः, (४४) 'वि न इन्द्र' (४५) 'वाचस्पतिम्' (४६) 'विश्वकर्मन्' इत्येषां भारद्वाजः शासः ।
(४७) 'उपयाम० अग्नये त्वा' इत्यारभ्य (५३) 'दूरे चत्ताय' इत्यन्तानां देवास्तत्रापि—(५३) 'युवन्तमिन्द्रा' 'दूरे चत्ताय' इत्यनयोः परुच्छेपः ।
(५४) 'परमेष्ठ्यभिधीतः' इत्यारभ्य (६३) 'आपवस्व' इत्यन्तानां वसिष्ठस्तत्रापि–(६३) 'आपवस्व' इत्यस्य नैध्रुविः कश्यपः ॥

देवता (१) 'उपयाम० आदित्येभ्यः' इत्यस्य सोमः, 'विष्ण उरु' इत्यस्य विष्णुः।
(२) 'कदा चन स्तरीः' इत्यस्यादित्यः, 'आदित्येभ्यस्त्वा' इत्यस्यादित्यग्रहः।
(३) 'कदा चन प्रयुच्छसि' इत्यस्यादित्यः, 'आदित्येभ्यस्त्वा' इत्यस्यादित्यग्रहः।
(४) 'यज्ञो देवानाम्' इत्यस्यादित्यः, 'आदित्येभ्यस्त्वा' इत्यस्यादित्यग्रहः।
(५) 'विवस्वन्नादित्य' इत्यस्यादित्यः, 'श्रदस्मै नरः' इत्यस्याशीर्नरो वा।
(६) 'वाममद्य' इत्यस्य सविता।
(७) 'उपयाम० सावित्रोसि' इत्यस्य सविता।
(८) 'उपयाम० सुशर्मासि' 'एष ते योनिः' इत्यनयोर्विश्वे देवाः।
(९) 'उपयाम० बृहस्पतिसुतस्य' इत्यस्य लिङ्गोक्ता, 'अहम्परस्तात्' इत्यस्य प्रजापतिरूप आत्मा।
(१०) 'अग्ना३इ' इत्यस्याग्निः, 'प्रजापतिर्वृषासि' इत्यस्य प्रजापतिः।
(११) 'उपयाम० हरिरसि' इत्यस्य ऋक्सामे, 'हर्योर्धानाः' इत्यस्य लिङ्गोक्ताः।
(१२) 'यस्ते अश्वसनिः' इत्यस्य लिङ्गोक्ता।
(१३) 'देवकृतस्य' 'मनुष्यकृतस्य' 'पितृकृतस्य' 'आत्मकृतस्य' 'एनस एनसः' 'यच्चाहमेनः' इत्येषामग्निः।
(१४) 'सं वर्चसा' इत्यस्य त्वष्टा।
(१५) 'समिन्द्र णः' इत्यस्य विश्वे देवाः।
(१६) 'सं वर्चसा' इत्यस्य त्वष्टा।
(१७) 'धाता रातिः' इत्यस्य लिङ्गोक्ता।
(१८) 'सुगा वः' इत्यस्य देवाः।
(१९) 'याँ आवह' (२०) 'वयꣳ हि' इत्यनयोरग्निः।
(२१) 'देवा गातुविदः' इत्यस्य वातः।
(२२) 'यज्ञ यज्ञम्' 'एष ते यज्ञः' इत्यनयोर्लिङ्गोक्ता।
(२३) 'माहिर्भूः' इत्यस्य रज्जुः, 'उरुꣳ हि' इत्यस्य वरुणः, 'नमो वरुणाय' इत्यस्य वरुणः।
(२४) 'अग्नेरनीकम्' इत्यस्याग्निः।
(२५) 'समुद्रे ते' इत्यस्य सोमः।
(२६) 'देवीरापः' इत्यस्यापः, 'देव सोमैष' इत्यस्य सोमः।
(२७) 'अवभृथ निचुम्पुण' इत्यस्य यज्ञः, 'देवानाꣳ समिदसि' इत्यस्याग्निः।
(२८) 'एजतु दशमास्यः' इत्यस्य गर्भः।
(२९) 'यस्यै ते' इत्यस्य वशा।
(३०) 'पुरुदस्मो विषुरूपः' इत्यस्य गर्भः।
(३१) 'मरुतो यस्य' इत्यस्य मरुतः।
(३२) 'मही द्यौः' इत्यस्य द्यावापृथिव्यौ।
(३३) 'आतिष्ठ वृत्रहन्' इत्यस्येन्द्रः, 'उपयाम० इन्द्राय' इत्यस्य सोमः, 'एष ते योनिः' इत्यस्य षोडशिग्रहः।
(३४) 'युक्ष्वा हि' इत्यस्येन्द्रः, 'उपयाम० इन्द्राय' इत्यस्य सोमः, 'एष ते योनिः' इत्यस्य षोडशिग्रहः।
(३५) 'इन्द्रमिद्धरी' इत्यस्येन्द्रः, 'उपयाम० इन्द्राय' इत्यस्य सोमः, 'एष ते योनिः' इत्यस्य षोडशिग्रहः।
(३६) 'यस्मान्न जातः' इत्यस्येन्द्रः।
(३७) 'इन्द्रश्च सम्राट्' इत्यस्येन्द्रावरुणौ षोडशी वा।
(३८) 'अग्ने पवस्व' इत्यस्याग्निः, 'उपयाम० अग्नये' इत्यस्य सोमः, 'एष ते योनिः' इत्यस्य ग्रहः, 'अग्ने वर्चस्विन्' इत्यस्याग्निः।
(३९) 'उत्तिष्ठन्नोजसा' इत्यस्य सोमः, 'उपयाम० इन्द्राय' इत्यस्य सोमः, 'एष ते योनिः' इत्यस्य ग्रहः, 'इन्द्रौजिष्ठ' इत्यस्येन्द्रः।
(४०) 'अदृश्रमस्य' इत्यस्य सूर्यः, 'उपयाम० सूर्याय' इत्यस्य सोमः, 'एष ते योनिः' इत्यस्य ग्रहः, 'सूर्य भ्राजिष्ठ' इत्यस्य सूर्यः।
(४१) 'उदु त्यम्' इत्यस्य सूर्यः, 'उपयाम० सूर्याय' इत्यस्य सोमः, 'एष ते योनिः' इत्यस्य ग्रहः।
(४२) 'आजिघ्र कलशम्' (४३) 'इडे रन्ते' इत्यनयोर्गौः।
(४४) 'वि न इन्द्र' इत्यस्येन्द्रः, 'उपयाम० इन्द्राय' इत्यस्य सोमः, 'एष ते योनिः' इत्यस्य ग्रहः।
(४५) 'वाचस्पतिम्' इत्यस्य विश्वकर्मा, 'उपयाम० इन्द्राय' इत्यस्य सोमः, 'एष ते योनिः' इत्यस्य ग्रहः।
(४६) 'विश्वकर्मन्' इत्यस्येन्द्रो विश्वकर्मा, 'उपयाम० इन्द्राय' इत्यस्य सोमः, 'एष ते योनिः' इत्यस्य ग्रहः।
(४७) 'उपयाम० अग्नये त्वा' 'इन्द्राय त्वा' 'विश्वेभ्यस्त्वा' 'अनुष्टुभे' इत्येषामदाभ्यः।
(४८) 'त्रेशीनान्त्वा' (४९) 'ककुभꣳ रूपम्' 'तस्मै ते' (५०) 'उशिक्त्वम्' 'वशी त्वम्' 'अस्मत्सखा' 'विश्वेषान्देवानाम्' इत्येषां सोमः।
(५१) 'इह रतिः' इत्यस्य पशवः, 'उपसृजन्धरुणम्' इत्यस्याग्निः।
(५२) 'सत्रस्य ऋद्धिः' इत्यस्य यजमानानामात्मा।
(५३) 'युवन्तम्' इत्यस्येन्द्रापर्वतौ, 'दूरे चत्ताय' इत्यस्येन्द्रः, 'भूर्भुवः स्वः' इत्यस्याशीः।
(५४) 'परमेष्ठ्यभिधीतः' 'प्रजापतिर्वाचि' 'अन्धो अच्छेतः' 'सविता सन्याम्' 'विश्वकर्मा दीक्षायाम्' 'पूषा सोमक्रयण्याम्' (५५) 'इन्द्रश्च मरुतश्च' 'असुरः पण्यमानः' 'मित्रः क्रीतः' 'विष्णुः शिपिविष्टः' 'विष्णुर्नरन्धिषः' (५६) 'सोम आगतः' 'वरुण आसन्द्याम्' 'अग्निराग्नीध्रे' 'इन्द्रो हविर्धाने' 'अथर्वोपावहियमाणः' (५७) 'विश्वे देवाः' 'विष्णुराप्रीतपाः' 'यमः सूयमानः' 'विष्णुः सम्भ्रियमाणः' 'वायुः पूयमानः' 'शुक्रः पूतः' 'शुक्रः क्षीरश्रीः' 'मन्थी सक्तुश्रीः' (५८) 'विश्वे देवाः' 'असुर्होमाय' 'रुद्रो हूयमानः' 'वातोभ्यावृत्तः' 'नृचक्षाः प्रतिख्यातः' 'भक्षो भक्ष्यमाणः' 'पितरो नाराशꣳसाः' (५९) 'सन्नः सिन्धुः' 'समुद्रोभ्यवहियमाणः' 'सलिलः प्रप्लुतः' इत्येषां लिङ्गोक्ताः, 'ययोरोजसा' इत्यस्य विष्णुवरुणौ।
(६०) 'देवान्दिवम्' इत्यस्य लिङ्गोक्ता।
(६१) 'चतुस्त्रिꣳशत्' इत्यस्य घर्मः।
(६२) 'यज्ञस्य दोहः' इत्यस्य यज्ञः।
(६३) 'आपवस्व' इत्यस्य सोमः॥

छन्दः (२) 'कदा चन' इत्यादिद्वयोर्बृहती, 'आदित्येभ्यस्त्वा' इति यजुः, (४) 'यज्ञो देवानाम्' इत्यस्य त्रिष्टुप्, (५) 'श्रदस्मै' इत्यस्य जगती, (६) 'वाममद्य' (९) 'अहम्परस्तात्' (१४) 'सं वर्चसा' इत्यारभ्य (२०) 'वयꣳ हि त्वा' इत्यन्तानां त्रिष्टुप्, (२१) 'देवा गातुविदः' इत्यस्य विराट्, (२३) 'उरुꣳ हि राजा' (२४) 'अग्नेरनीकम्' इत्यनयोस्त्रिष्टुप्, (२५) 'समुद्रे ते' इत्यस्य विराट्, (२६) 'देवीरापः' इत्यस्य पङ्क्तिर्बृहती वा, (२८) 'एजतु दशमास्यः' इत्यस्य महापङ्क्तिः, (३१) 'मरुतो यस्य' (३२) 'मही द्यौः' इत्यनयोर्गायत्री, (३३) 'आतिष्ठ वृत्रहन्' (३४) 'युक्ष्वा हि' (३५) 'इन्द्रमिद्धरी' इत्येषामनुष्टुप्, (३६) 'यस्मान्न जातः' (३७) 'इन्द्रश्च सम्राट्' इत्यनयोस्त्रिष्टुप्, 'सह प्राणेन' इति यजुः, (३८) 'अग्ने पवस्व' (३९) 'उत्तिष्ठन्नोजसा' (४०) 'अदृश्रमस्य' इत्येषां गायत्री, सर्वेषामन्ते यजूंषि, (४१) 'उदु त्यम्' इत्यस्य गायत्री, (४२) 'आजिघ्र कलशम्' इत्यस्य महापङ्क्तिः, (४३) 'इडे रन्ते' इत्यस्य प्रस्तारपङ्क्तिः, (४४) 'वि न इन्द्र' इत्यस्यानुष्टुप्, (४५) 'वाचस्पतिम्' (४६) 'विश्वकर्मन्' इत्यनयोस्त्रिष्टुप्, (५१) 'उपसृजन्धरुणम्' इत्यस्योष्णिक्, (५२) 'सत्रस्य ऋद्धिः' इत्यस्य बृहती, (५३) 'युवन्तमिन्द्रा' 'दूरे चत्ताय' इत्यनयोरत्यष्टिः, (५९) 'ययोरोजसा' इत्यस्य त्रिष्टुप्, (६१) 'चतुस्त्रिꣳशत्' इत्यस्य पङ्क्तिस्त्रिष्टुब्वा, (६२) 'यज्ञस्य दोहः' इत्यस्य त्रिष्टुप्, (६३) 'आपवस्व' इत्यस्य गायत्री॥

॥ हरिः ॐ ॥

॥१॥ उपयामगृहीतोस्यादित्येभ्यस्त्वा।
विष्ण्ऽउरुगायैष ते सोमस्तꣳ रक्षस्व मा त्वा दभन्॥१॥

कुदा चुन स्तुरीरसि नेन्द्र सश्चसि दाशुषे ।
उपोपेन्नु मघवन्भूयऽइन्नु ते दानन्देवस्य पृच्यतऽआदित्येब्भ्यस्त्वा ॥२॥
कुदा चुन प्प्रयुच्छस्युभे निपासि जन्मनी ।
तुरीयादित्य सवनन्तऽइन्द्रियमातस्थावमृतन्दिव्व्यादित्येब्भ्यस्त्वा ॥३॥
युज्ञो देवानाम्प्रत्येति सुम्नमादित्यासो भवता मृडयन्तः ।
आ वोर्वाची सुमतिर्ववृत्यादुꣳहोश्चिद्या वरिवोवित्तुरासदादित्येब्भ्यस्त्वा ॥४॥
विवस्वन्नादित्यैष ते सोमपीथस्तस्मिन्मत्स्व । श्रदस्मै नरो वचसे दधातन यदा-
शीर्दा दम्पती वाममश्नुतः । पुमान्पुत्रो जायते विन्दते वस्वधा विश्वाहारपऽएधते
गृहे ॥५॥

॥२॥ वाममुद्य सवितर्वाममु श्वो दिवेदिवे वाममुस्मब्भ्यꣳ सावीः ।
वामस्य हि क्षयस्य देव भूरेरया धिया वामभाजः स्याम ॥६॥
उपयामगृहीतोसि सावित्रोसि चनोधाश्चनोधाऽअसि चनो मयि धेहि ।
जिन्व युज्ञञ्जिन्व युज्ञपतिम्भगाय देवाय त्वा सवित्रे ॥७॥

॥३॥ उपयामगृहीतोसि सुशर्म्मासि सुप्प्रतिष्ठानो बृहदुक्षाय नमः ।
विश्वेब्भ्यस्त्वा देवेब्भ्यऽएष ते योनिर्विश्वेब्भ्यस्त्वा देवेब्भ्यः ॥८॥

॥४॥ उपयामगृहीतोसि बृहस्पतिसुतस्य देव सोम तऽइन्दोरिन्द्रियावतः पत्नीवतो ग्रहा-
ँ॥ऽऋद्ध्यासम् । अहम्पुरस्तादहमवस्ताद्यदन्तरिक्षन्तदु मे पिताभूत् । अहꣳ सूर्य्य-
मुभयतो ददर्शाहन्देवानाम्परमङ्गुहा यत् ॥९॥
अग्ना३॥ऽइ पत्नीवन्त्सजूर्देवेन त्वष्ट्रा सोमम्पिब स्वाहा । प्रजापतिर्वृषासि रेतोधा
रेतो मयि धेहि प्प्रजापतेस्ते वृष्णो रेतोधसो रेतोधामशीय ॥१०॥

॥५॥ उपयामगृहीतोसि हरिरसि हारियोजनो हरिब्भ्यान्त्वा ।
हर्य्योर्द्धाना स्त्थ सुहसोमाऽइन्द्राय ॥११॥
यस्तेऽअश्वसनिर्भक्षो यो गोसनिस्तस्य तऽइष्टयजुषस्तुतस्तोमस्य शस्तोक्थस्यो-
पहूतस्योपहूतो भक्षयामि ॥१२॥
देवकृतस्यैनसोवयजनमसि मनुष्यकृतस्यैनसोवयजनमसि पितृकृतस्यैनसोवयजन-
मस्यात्मकृतस्यैनसोवयजनमस्येनसऽएनसोवयजनमसि । यच्चाहमेनो विद्वाँश्चकार
यच्चाविद्वाँस्तस्य सर्व्वस्यैनसोवयजनमसि ॥१३॥

सँवर्चसा पयसा सन्तनूभिरगन्महि मनसा सꣳ शिवेन ।
त्वष्टा सुदत्रो विदधातु रायोनुमार्ष्टु तन्वो यद्विलिष्टम् ॥१४॥

॥६॥ समिन्द्र णो मनसा नेषि गोभिः सꣳ सूरिभिर्म्मघवन्त्सꣳ स्वस्त्या ।
सम्ब्रह्मणा देवकृतँय्यदस्ति सन्देवानाꣳ सुमतौ युज्ञियानाꣳ स्वाहा ॥१५॥
सँवर्चसा पयसा सन्तनूभिरगन्महि मनसा सꣳ शिवेन ।
त्वष्टा सुदत्रो विदधातु रायोनुमार्ष्टु तन्वो यद्विलिष्टम् ॥१६॥
धाता रातिः सवितेदञ्जुषन्ताम्प्रजापतिर्न्निधिपा देवोऽअग्निः ।
त्वष्टा विष्णुः प्प्रजया सꣳरराणा यजमानाय द्रविणन्दधातु स्वाहा ॥१७॥
सुगा वो देवाः सदनाऽअकर्म्म यऽआजग्मेदꣳ सवनञ्जुषाणाः ।
भरमाणा वहमाना हवीꣳष्यस्मे धत्त वसवो वसूनि स्वाहा ॥१८॥
याꣳ॥ऽआवहऽउशतो देव देवाँस्तान्प्रेरय स्वेऽअग्ने सधस्थे ।
जक्षिवाꣳसः पपिवाꣳसश्च विश्वेसुंघर्म्मꣳ स्वरातिष्ठतानु स्वाहा ॥१९॥
वयꣳ हि त्वा प्प्रयति युज्ञेऽअस्मिन्नग्ने होतारमवृणीमहीह ।
ऋधगया ऽऋधगुताशमिष्ठाः प्प्रजानन्युज्ञमुपयाहि विद्वान्त्स्वाहा ॥२०॥
देवा गातुविदो गातुँवित्त्वा गातुमित ।
मनसस्पतऽइमन्देव युज्ञꣳ स्वाहा वाते धाः ॥२१॥
यज्ञ युज्ञङ्गच्छ युज्ञपतिङ्गच्छ स्वाँय्योनिङ्गच्छ स्वाहा ।
एष ते युज्ञो यज्ञपते सुहसूक्तवाकः सर्व्ववीरस्तञ्जुषस्व स्वाहा ॥२२॥

॥७॥ माहिर्भूर्म्मा पृदाकुः । उरुꣳ हि राजा वरुणश्चकार सूर्य्याय पन्थामन्वेतवाऽउ ।
अपदे पादा प्प्रतिधातवेकरुतापवक्ता हृदयाविधश्चित् ।
नमो वरुणायाभिष्ठितो वरुणस्य पाशः ॥२३॥
अग्नेरनीकमुपऽआविवेशापान्नपात्प्रतिरक्षन्नसुर्य्यम् ।
दमेदमे समिधँय्यक्ष्यग्ने प्प्रति ते जिह्वा घृतमुच्चरण्यत्स्वाहा ॥२४॥
समुद्रे ते हृदयमप्प्स्वन्तः सन्त्वा विशन्त्वोषधीरुतापः ।
युज्ञस्य त्वा यज्ञपते सूक्तोक्तौ नमोवाके विधेम यत्स्वाहा ॥२५॥
देवीरापऽएष वो गर्ब्भस्तꣳ सुप्प्रीतꣳ सुभृतम्बिभृत ।
देव सोमैष ते लोकस्तस्मिञ्छञ्च वक्ष्व परि च वक्ष्व ॥२६॥

अवभृथ निचुम्पुण निचेरुरसि निचुम्पुणः । अव देवैर्देवकृतमेनोयासिषमव मर्त्यै-
र्म्मर्त्त्यकृतम्पुरुराव्ण्णो देव रिषस्प्पाहि । देवानाꣳसमिदसि ॥२७॥
॥८॥ एजतु दशमास्यो गर्ब्भो जरायुणा सह । यथायँव्वायुरेजति यथा समुद्रऽएजति ।
एवायन्दशमास्योऽअस्रज्जरायुणा सह ॥२८॥
यस्यै ते यज्ञियो गर्ब्भो यस्यै योनिर्हिरण्ण्ययी । अङ्गान्यह्रुता यस्य तम्मात्रा
समजीगमꣳ स्वाहा ॥२९॥
पुरुदस्मो विषुरूपऽइन्दुरन्तर्म्महिमानमानञ्ज धीरः । एकपदीन्द्विपदीन्त्रिपदीञ्च-
तुष्प्पदीमष्टापदीम्भुवनानु प्प्रथन्ताꣳ स्वाहा ॥३०॥
मरुतो यस्य हि क्षये पाथा दिवो विमहसः । स सुगोपातमो जनः ॥३१॥
मही द्यौः पृथिवी च नऽइमँय्यज्ञम्मिमिक्षताम् । पिपृतान्नो भरीमभिः ॥३२॥
॥९॥ आतिष्ठ वृत्रहन्रथँय्युक्ता ते ब्रह्मणा हरी । अर्व्वाचीनꣳ सु ते मनो ग्रावा कृणोतु
व्वग्नुना । उपयामगृहीतोसीन्द्राय त्वा षोडशिनऽएष ते योनिरिन्द्राय त्वा
षोडशिने ॥३३॥
॥१०॥ युक्ष्वा हि केशिना हरी वृषणा कक्ष्यप्प्रा । अथा नऽइन्द्र सोमपा गिरामुप-
श्श्रुतिञ्चर । उपयामगृहीतोसीन्द्राय त्वा षोडशिनऽएष ते योनिरिन्द्राय त्वा
षोडशिने ॥३४॥
॥११॥ इन्द्रमिद्धरी वहतोप्प्रतिधृष्टशवसम् । ऋषीणाञ्च स्तुतीरुप यज्ञञ्च मानुषाणाम् ।
उपयामगृहीतोसीन्द्राय त्वा षोडशिनऽएष ते योनिरिन्द्राय त्वा षोडशिने ॥३५॥
॥१२॥ यस्मान्न जातः परोऽअन्न्योऽअस्ति यऽआविवेश भुवनानि विश्श्वा । प्रजापतिः
प्प्रजया सꣳरराणस्त्रीणि ज्योतीꣳषि सचते स षोडशी ॥३६॥
इन्द्रश्च सम्म्राड्वरुणश्च राजा तौ ते भक्षञ्चक्रतुरग्ग्रऽएतम् । तयोरहमनु भक्षम्भ-
क्षयामि व्वाग्देवी जुषाणा सोमस्य तृप्प्यतु सह प्प्राणेन स्वाहा ॥३७॥
॥१३॥ अग्ने पवस्व स्वपाऽअस्म्मे वर्च्चः सुवीर्य्यम् । दधद्रयिम्मयि पोषम् । उपयाम-
गृहीतोस्यग्नये त्वा वर्च्चसऽएष ते योनिरग्नये त्वा वर्च्चसे । अग्ने वर्च्चस्विन्व-
र्च्चस्वाँस्त्वन्देवेष्ष्वसि वर्च्चस्वानहम्मनुष्ष्येषु भूयासम् ॥३८॥
॥१४॥ उत्तिष्ठन्नोजसा सह पीत्वी शिप्प्रेऽअवेपयः । सोममिन्द्र चमूसुतम् । उपयाम-
गृहीतोसीन्द्राय त्वौजसऽएष ते योनिरिन्द्राय त्वौजसे । इन्द्रौजिष्ठौजिष्ठस्त्वन्दे-
वेष्ष्वस्योजिष्ठोहम्मनुष्ष्येषु भूयासम् ॥३९॥

॥१५॥ अदृश्श्रमस्य केतवो वि रश्म्मयो जनाँ२ऽअनु । भ्राजन्तोऽअग्नयो यथा ।
उपयामगृहीतोसि सूर्य्याय त्वा ब्भ्राजायैष ते योनिः सूर्य्याय त्वा ब्भ्राजाय ।
सूर्य्य ब्भ्राजिष्ठ ब्भ्राजिष्ठस्त्वन्देवेष्ष्वसि ब्भ्राजिष्ठोहम्मनुष्ष्येषु भूयासम् ॥४०॥
॥१६॥ उदु त्यञ्जातवेदसन्देवँव्वहन्ति केतवः । दृशे विश्श्वाय सूर्य्यम् । उपयामगृहीतोसि
सूर्य्याय त्वा ब्भ्राजायैष ते योनिः सूर्य्याय त्वा ब्भ्राजाय ॥४१॥
॥१७॥ आजिघ्र कलशम्मह्या त्वा विशन्त्विन्दवः । पुनरूर्जा निवर्त्तस्व सा नः सहस्र-
न्धुक्ष्वोरुधारा पयस्वती पुनर्म्माविशताद्रयिः ॥४२॥
इडे रन्ते हव्ये काम्म्ये चन्द्रे ज्योतेदिति सरस्वति महि विश्श्रुति ।
एता तेऽअग्न्ये नामानि देवेब्भ्यो मा सुकृतम्ब्रूतात् ॥४३॥
॥१८॥ वि नऽइन्द्र मृधो जहि नीचा यच्छ पृतन्न्यतः । योऽअस्म्माँ२ऽअभिदासत्यध-
रङ्गमया तमः । उपयामगृहीतोसीन्द्राय त्वा विमृधऽएष ते योनिरिन्द्राय त्वा
व्विमृधे ॥४४॥
॥१९॥ व्वाचस्प्पतिँव्विश्श्वकर्म्माणमूतये मनोजुवँव्वाजेऽअद्या हुवेम । स नो विश्श्वानि हवनानि
जोषद्विश्श्वशम्भूरवसे साधुकर्म्मा । उपयामगृहीतोसीन्द्राय त्वा विश्श्वकर्म्मणऽएष
ते योनिरिन्द्राय त्वा व्विश्श्वकर्म्मणे ॥४५॥
॥२०॥ विश्श्वकर्म्मन्हविषा वर्द्धनेन त्रातारमिन्द्रमकृणोरवद्ध्यम् । तस्म्मै विशः समनमन्त
पूर्व्वीरयमुग्ग्रो विहव्व्यो यथासत् । उपयामगृहीतोसीन्द्राय त्वा विश्श्वकर्म्मणऽएष ते
योनिरिन्द्राय त्वा व्विश्श्वकर्म्मणे ॥४६॥
॥२१॥ उपयामगृहीतोस्यग्नये त्वा गायत्रच्छन्दसङ्गृह्णामीन्द्राय त्वा त्रिष्टुप्प्छन्दसङ्गृह्णामि
विश्श्वेब्भ्यस्त्वा देवेब्भ्यो जगच्छन्दसङ्गृह्णाम्म्यनुष्टुप्तेभिगरः ॥४७॥
व्रेशीनान्त्वा पत्मन्नाधूनोमि कुकूननानान्त्वा पत्मन्नाधूनोमि भन्दनानान्त्वा
पत्मन्नाधूनोमि मदिन्तमानान्त्वा पत्मन्नाधूनोमि मधुन्तमानान्त्वा पत्मन्ना-
धूनोमि शुक्रन्त्वा शुक्रऽआधूनोम्म्यह्नो रूपे सूर्य्यस्य रश्म्मिषु ॥४८॥
ककुभꣳ रूपँव्वृषभस्य रोचते बृहच्छुक्रः शुक्रस्य पुरोगाः सोमः सोमस्य पुरोगाः ।
यत्ते सोमादाब्भ्यन्नाम जागृवि तस्म्मै त्वा गृह्णामि तस्म्मै ते सोम सोमाय
स्वाहा ॥४९॥
उशिक्त्वन्देव सोमाग्नेः प्प्रियम्पाथोपीहि वशी त्वन्देव सोमेन्द्रस्य प्प्रियम्पाथोपी-
ह्यस्म्मत्सखा त्वन्देव सोम विश्श्वेषान्देवानाम्प्प्रियम्पाथोपीहि ॥५०॥

॥२२॥ इह रतिरिह रमध्वमिह धृतिरिह स्वधृतिः स्वाहा । उपसृजन्धरुणम्मात्रे धरुणो
मातरन्धयन् । रायस्पोषमस्मासु दीधरत्स्वाहा ॥५१॥

सत्रस्यऽऋद्धिरस्यगन्म ज्योतिरमृताऽअभूम । दिवम्पृथिव्याऽअध्यारुहामाविदाम देवान्त्स्वर्ज्योतिः ॥५२॥

युवन्तमिन्द्रापर्वता पुरोयुधा यो नः पृतन्यादप तन्तमिद्धतँवज्रेण तन्तमिद्धतम् । दूरे चत्ताय च्छन्त्सद्गहनँयदिनक्षत् । अस्माकꣳ शत्रून्परि शूर विश्वतो दर्मा दर्षीष्ट विश्वतः । भूर्भुवः स्वः सुप्रजाः प्रजाभिः स्याम सुवीरा वीरैः सुपोषाः पोषैः ॥५३॥

॥२३॥ परमेष्ठ्यभिधीतः प्रजापतिर्वाचि व्याहृतायामन्धोऽअच्छेतः
सविता सन्याँविश्वकर्मा दीक्षायाम्पूषा सोमक्रयण्यामिन्द्रश्च ॥५४॥

इन्द्रश्च मरुतश्च क्रयायोपोत्थितोसुरः पण्यमानो मित्रः क्रीतो विष्णुः शिपिविष्टऽऊरावासन्नो विष्णुर्नरन्धिषः प्रोह्यमाणः सोमः ॥५५॥

प्रोह्यमाणः सोमऽआगतो वरुणऽआसन्द्यामासन्नोग्निराग्नीध्रऽइन्द्रो हविर्द्धानेथर्वोपावह्रियमाणो विश्वे देवाः ॥५६॥

विश्वे देवाऽअꣳशुषु न्युप्तो विष्णुराप्रीतपाऽआप्याय्यमानो यमः सूयमानो विष्णुः सम्भ्रियमाणो वायुः पूयमानः शुक्रः पूतः शुक्रः क्षीरश्रीर्मन्थी सक्तुश्रीर्विश्वे देवाः ॥५७॥

विश्वे देवाश्चमसेषून्नीतोसुर्होमायोद्यतो रुद्रो हूयमानो वातोभ्यावृत्तो नृचक्षाः प्रतिख्यातो भक्षो भक्ष्यमाणः पितरो नाराशꣳसाः सन्नः सिन्धुः ॥५८॥

सन्नः सिन्धुरवभृथायोद्यतः समुद्रोभ्यवह्रियमाणः सलिलः प्रप्लुतो ययोरोजसा स्कभिता रजाꣳसि वीर्येभिर्वीरतमा शविष्ठा । या पत्येतेऽअप्रतीता सहोभिर्विष्णूऽअगन्वरुणा पूर्वहूतौ ॥५९॥

देवान्दिवमगन्यज्ञस्ततो मा द्रविणमष्टु मनुष्यानन्तरिक्षमगन्यज्ञस्ततो मा द्रविणमष्टु पितॄन्पृथिवीमगन्यज्ञस्ततो मा द्रविणमष्टु यङ्कञ्च लोकमगन्यज्ञस्ततो मे भद्रमभूत् ॥६०॥

चतुस्त्रिꣳशत्तन्तवो ये वितत्निरे यऽइमँयज्ञꣳ स्वधया ददन्ते । तेषाञ्छिन्नꣳ सम्वेतद्दधामि स्वाहा घर्मोऽअप्येतु देवान् ॥६१॥

यज्ञस्य दोहो विततः पुरुत्रा सोऽअष्टधा दिवमन्वाततान । स यज्ञ धुक्ष्व महि मे प्रजायाꣳ रायस्पोषँविश्वमायुरशीय स्वाहा ॥६२॥

आपवस्व हिरण्यवदश्ववत्सोम वीरवत् । वाजङ्गोमन्तमाभर स्वाहा ॥६३॥

॥ इत्यष्टमोऽध्यायः ॥

# अथ नवमोऽध्यायः

ऋषिः (१) 'देव सवितः' इत्यारभ्य (३४) 'वसवस्त्रयोदशाक्षरेण' इत्यन्तानां सामान्यतो बृहस्पतिरिन्द्रश्च ऋषी । विशेषतश्च—

(१४) 'एष स्य' (१५) 'उत स्मास्य' इत्यनयोर्वामदेव्यो दधिक्रावा, (१६) 'शन्नो भवन्तु' इत्यस्य वसिष्ठः, (१७) 'ते नो अर्वन्तः' इत्यस्य नाभानेदिष्ठः, (१८) 'वाजेवाजे' (१९) 'आ मा' इत्यनयोर्वसिष्ठः, (२६) 'सोमꣳ राजानम्' इत्यादित्रयाणां तापसः ।

(३५) 'एष ते निर्ऋते' इत्यस्य वरुणः, 'अग्निनेत्रेभ्यः' इत्यारभ्य (४०) 'इमन्देवाः' इत्यन्तानां वरुणो देवाश्च, तत्रापि– (३७) 'अग्ने सहस्व' इत्यस्य भारतौ देवश्रवोदेववातौ ।

देवता (१) 'देव सवितः' इत्यस्य सविता ।

(२) 'ध्रुवसदन्त्वा' इत्यस्येन्द्रः, 'उपयाम० इन्द्राय' इत्यस्य सोमः, 'एष ते योनिः' इत्यस्य ग्रहः, 'अप्सुषदम्' इत्यस्येन्द्रः, 'उपयामगृहीतः' 'एष ते योनिः' इत्यनयोः क्रमेण सोमग्रहौ, 'पृथिविसदम्' इत्यस्येन्द्रः, 'उपयामगृहीतः' 'एष ते योनिः' इत्यनयोः क्रमेण सोमग्रहौ ।

(३) 'अपाꣳ रसम्' इत्यस्य रसः, 'उपयामगृहीतः' 'एष ते योनिः' इत्यनयोः क्रमेण सोमग्रहौ ।

(४) 'ग्रहा ऊर्जाहुतयः' इत्यस्य लिङ्गोक्ता, 'उपयामगृहीतः' 'एष ते योनिः' इत्यनयोः क्रमेण सोमग्रहौ, 'सम्पृचौ स्थः' 'विपृचौ स्थः' इत्यनयोर्लिङ्गोक्ता ।

(५) 'इन्द्रस्य वज्रः' इत्यस्य रथः, 'वाजस्य नु' इत्यस्य पृथिवी, 'तस्यान्नो देवः' इत्यस्य सविता ।

(६) 'अप्स्वन्तः' इत्यस्याश्वः, 'देवीरापः' इत्यस्यापः ।

(७) 'वातो वा' (८) 'वातरꣳहा भव' (९) 'जवो यस्ते' 'वाजिनो वाजजितः' इत्येषामश्वः ।

(१०) 'देवस्याहम्' इत्यादिचतुर्णाम् ,(११) 'बृहस्पते वाजम्' 'इन्द्र वाजम्' इत्यनयोः, (१२) 'एषा वः' इत्यादिद्वयोः, (१३) 'देवस्याहम्' 'बृहस्पतेर्वाजजितः' इत्यनयोश्च लिङ्गोक्ता, 'वाजिनो वाजजितः' (१४) 'एष स्य' (१५) 'उत स्मास्य' (१६) 'शन्नो भवन्तु' (१७) 'ते नो अर्वन्तः' (१८) 'वाजेवाजे' इत्येषामश्वः ।

(१९) 'आ मा' इत्यस्य प्रजापतिः, 'वाजिनो वाजजितः' इत्यस्याश्वः ।

(२०) 'आपये स्वाहा' 'स्वापये स्वाहा' 'अपिजाय स्वाहा' 'क्रतवे स्वाहा' 'वसवे स्वाहा' 'अहर्पतये स्वाहा' 'अह्ने मुग्धाय' 'मुग्धाय वैनꣳशिनाय' 'विनꣳशिन आन्त्यायनाय' 'अन्त्याय भौवनाय' 'भुवनस्य पतये' 'अधिपतये स्वाहा' (२१) 'आयुर्यज्ञेन' 'प्राणो यज्ञेन' 'चक्षुर्यज्ञेन' 'श्रोत्रं यज्ञेन' 'पृष्ठं यज्ञेन' 'यज्ञो यज्ञेन' इत्येषां प्रजापतिः, 'प्रजापतेः प्रजाः' 'स्वर्देवाः' 'अमृता अभूम' इत्येषां यजमानः ।

(२२) 'अस्मे वः' इत्यस्य दिशः, 'नमो मात्रे' इत्यस्य पृथिवी, 'इयन्ते' इत्यस्यासन्दी, 'यन्तासि' इत्यस्य सुन्वन् ।

(२३) 'वाजस्येमम्' (२४) 'वाजस्येमाम्' (२५) 'वाजस्य नु' इत्येषां प्रजापतिः ।

(२६) 'सोमानꣳ राजानम्' इत्यस्य विश्वे देवाः ।

(२७) 'अर्यमणम्' इत्यस्य लिङ्गोक्ता ।

(२८) 'अग्ने अच्छावदेह' इत्यस्याग्निः ।
(२९) 'प्र नो यच्छतु' इत्यस्य लिङ्गोक्ता ।
(३०) 'देवस्य त्वा' इत्यस्य सविता, 'सरस्वत्यै वाचः' इत्यस्य सुन्वन् ।
(३१) 'अग्निरेकाक्षरेण' 'अश्विनौ द्व्यक्षरेण' 'विष्णुस्त्र्यक्षरेण' 'सोमश्चतुरक्षरेण' (३२) 'पूषा पञ्चाक्षरेण' 'सविता षडक्षरेण' 'मरुतः सप्ताक्षरेण' 'बृहस्पतिरष्टाक्षरेण' (३३) 'मित्रो नवाक्षरेण' 'वरुणो दशाक्षरेण' 'इन्द्र एकादशाक्षरेण' 'विश्वे देवा द्वादशाक्षरेण' (३४) 'वसवस्त्रयोदशाक्षरेण' 'रुद्राश्चतुर्दशाक्षरेण' 'आदित्याः पञ्चदशाक्षरेण' 'अदितिः षोडशाक्षरेण' 'प्रजापतिः सप्तदशाक्षरेण' इत्येषां लिङ्गोक्ता ।
(३५) 'एष ते निर्ऋते' इत्यस्य पृथिवी, 'अग्निनेत्रेभ्यः' 'यमनेत्रेभ्यः' 'विश्वदेवनेत्रेभ्यः' 'मित्रावरुणनेत्रेभ्यः' 'सोमनेत्रेभ्यः' (३६) 'ये देवा अग्निनेत्राः' 'ये देवा यमनेत्राः' 'ये देवा विश्वदेवनेत्राः' 'ये देवा मित्रावरुणनेत्राः' 'ये देवाः सोमनेत्राः' इत्येषां देवाः ।
(३७) 'अग्ने सहस्व' इत्यस्याग्निः ।
(३८) 'देवस्य त्वा' इत्यस्य सविता, 'उपांꣳशोर्वीर्येण' 'रक्षसान्त्वा' 'अवधिष्म रक्षः' इत्येषां रक्षोहा ।
(३९) 'सविता त्वा' (४०) 'इमन्देवाः' इत्यनयोर्यजमानः ॥

छन्दः (१) 'देव सवितः' इत्यस्य त्रिष्टुप्, 'स्वाहा' इति यजुः, (३) 'अपाꣳ रसम्' (४) 'ग्रहा ऊर्जाहुतयः' इत्यनयोरनुष्टुप्, (५) 'वाजस्य नु' इत्यस्यातिजगती, (६) 'अप्स्वन्तः' इत्यस्य पुरउष्णिक्, (७) 'वातो वा' इत्यस्योष्णिक्, (८) 'वातरꣳहा भव' इत्यस्य त्रिष्टुप्, (९) 'जवो यस्ते' (१४) 'एष स्य वाजी' (१५) 'उत स्मास्य' इत्येषां जगती, 'स्वाहा' इति यजुः, (१६) 'शन्नो भवन्तु' इत्यस्य विराट्, (१७) 'ते नो अर्वन्तः' इत्यस्य जगती, (१८) 'वाजेवाजे' (१९) 'आ मा' (२३) 'वाजस्येमम्' (२४) 'वाजस्येमाम्' (२५) 'वाजस्य नु' इत्येषां त्रिष्टुप्, (२६) 'सोमꣳ राजानम्' (२७) 'अर्यमणम्' (२८) 'अग्ने अच्छावदेह' इत्येषामनुष्टुप्, (२९) 'प्र नो यच्छतु' इत्यस्य गायत्री, (३७) 'अग्ने सहस्व' इत्यस्यानुष्टुप् ॥

॥ हरिः ॐ ॥

॥१॥ देव सवितः प्प्रसुव यज्ञम्प्प्रसुव यज्ञपतिम्भगाय । दिव्व्यो गन्धर्वः केतपूः केतन्नः
पुनातु वाचस्पतिर्व्वाजन्नः स्वदतु स्वाहा ॥१॥
ध्रुवसदन्त्वा नृषदम्मनःसदमुपयामगृहीतोसीन्द्राय त्वा जुष्ट्टङ्गृह्णाम्म्येष ते योनि-
रिन्द्राय त्वा जुष्ट्टतमम् । अप्प्सुषदन्त्वा घृतसदँव्योमसदमुपयामगृहीतोसीन्द्राय
त्वा जुष्ट्टङ्गृह्णाम्म्येष ते योनिरिन्द्राय त्वा जुष्ट्टतमम् । पृथिविसदन्त्वान्तरिक्क्षस-
दन्दिविसदन्देवसदन्नाकसदमुपयामगृहीतोसीन्द्राय त्वा जुष्ट्टङ्गृह्णाम्म्येष ते योनि-
रिन्द्राय त्वा जुष्ट्टतमम् ॥२॥
अपाꣳ रसमुद्वयसꣳ सूर्य्ये सन्तꣳ समाहितम् । अपाꣳ रसस्य यो रसस्तँवो
गृह्णाम्म्युत्तममुपयामगृहीतोसीन्द्राय त्वा जुष्ट्टङ्गृह्णाम्म्येष ते योनिरिन्द्राय त्वा
जुष्ट्टतमम् ॥३॥
ग्रहाऽऊर्ज्जाहुतयो व्यन्तो विप्प्राय मतिम् । तेषाँविशिप्प्रियाणाँवोहमिषमूर्ज्जꣳ समग्ग्र-
भमुपयामगृहीतोसीन्द्राय त्वा जुष्ट्टङ्गृह्णाम्म्येष ते योनिरिन्द्राय त्वा जुष्ट्टतमम् ।
सम्पृचौ स्थः सम्मा भद्रेण पृङ्क्तँविपृचौ स्थो वि मा पाप्मना पृङ्क्तम् ॥४॥



॥२॥ इन्द्रस्य वज्र्रोसि वाजसास्त्वयायँवाजꣳ सेत् । वाजस्य नु प्प्रसवे मातरम्महीमदिति-
न्नाम वचसा करामहे । यस्यामिदँविश्श्वम्भुवनमाविवेश तस्यान्नो देवः सविता धर्म्म
साविषत् ॥५॥
अप्प्स्वन्तरमृतमप्प्सु भेषजमपामुत प्प्रशस्तिष्ष्वश्श्वा भवत वाजिनः ।
देवीरापो यो वऽऊर्म्मिः प्प्रतूर्त्तिः ककुन्मान्वाजसास्तेनायँवाजꣳ सेत् ॥६॥
वातो वा मनो वा गन्धर्व्वाः सप्तविꣳशतिः ।
तेऽअग्ग्रेश्श्वमयुञ्जँस्तेऽअस्स्मिञ्जवमादधुः ॥७॥
वातरꣳहा भव वाजिन्न्युज्यमानऽइन्द्रस्येव दक्षिणः श्रियैधि ।
युञ्जन्तु त्वा मरुतो विश्श्ववेदसऽआ ते त्वष्ट्टा पत्सु जवन्दधातु ॥८॥
जवो यस्ते वाजिन्निहितो गुहा यः श्येने परीत्तोऽअचरच्च वाते । तेन नो
वाजिन्बलवान्बलेन वाजजिच्च भव समने च पारयिष्णुः । वाजिनो वाजजितो
वाजꣳ सरिष्ष्यन्तो बृहस्प्पतेर्ब्भागमवजिग्घ्रत ॥९॥

॥३॥ देवस्याहꣳ सवितुः सवे सत्त्यसवसो बृहस्प्पतेरुत्तमन्नाकꣳ रुहेयम् । देवस्याहꣳ सवितुः
सवे सत्यसवसऽइन्द्रस्योत्तमन्नाकꣳ रुहेयम् । देवस्याहꣳ सवितुः सवे सत्त्यप्प्रसवसो
बृहस्प्पतेरुत्तमन्नाकमरुहम् । देवस्याहꣳ सवितुः सवे सत्त्यप्प्रसवसऽइन्द्रस्योत्तमन्नाक-
मरुहम् ॥१०॥
बृहस्प्पते वाजञ्जय बृहस्प्पतये वाचँवदत बृहस्प्पतिँवाजञ्जापयत ।
इन्द्र वाजञ्जयेन्द्राय वाचँवदतेन्द्रँवाजञ्जापयत ॥११॥
एषा वः सा सत्त्या सँवाग्भूद्यया बृहस्प्पतिँवाजमजीजपताजीजपत बृहस्प्पतिँवाजँव-
नस्प्पतयो विमुच्च्यद्ध्वम् । एषा वः सा सत्त्या सँवाग्भूद्ययेन्द्रँवाजमजीजपताजीज-
पतेन्द्रँवाजँवनस्प्पतयो विमुच्च्यद्ध्वम् ॥१२॥
देवस्याहꣳ सवितुः सवे सत्त्यप्प्रसवसो बृहस्प्पतेर्व्वाजजितो वाजञ्जेषम् ।
वाजिनो वाजजितोद्ध्वन स्क्कभ्नुवन्तो योजना मिमानाः काष्ठाङ्गच्छत ॥१३॥
एष स्य वाजी क्षिपणिन्तुरण्ण्यति ग्रीवायाम्बद्धोऽअपिकक्षऽआसनि ।
क्क्रतुन्दधिक्राऽअनु सꣳसनिष्ष्यदत्पथामङ्काꣳस्यन्वापनीफणत्स्वाहा ॥१४॥
उत स्मास्य द्रवतस्तुरण्ण्यतः पर्ण्णन्न वेरनुवाति प्प्रगर्द्धिनः ।
श्येनस्येव ध्रजतोऽअङ्कसम्परि दधिक्राव्णः सहोर्ज्जा तरित्रतः स्वाहा ॥१५॥

शन्नो भवन्तु वाजिनो हवेषु देवताता मितद्रवः स्वर्काः ।
जम्भयन्तोहिँवृकꣳ रक्षाꣳसि सनेम्म्यस्म्मद्युयवन्नमीवाः ॥१६॥
ते नोऽअर्वन्तो हवनश्श्रुतो हवँविश्श्वे शृण्ण्वन्तु वाजिनो मितद्रवः ।
सहस्रसा मेधसाता सनिष्ष्यवो महो ये धनꣳ समिथेषु जभ्भ्रिरे ॥१७॥
वाजेवाजेवत वाजिनो नो धनेषु विप्प्राऽअमृताऽऋतज्ज्ञाः ।
अस्य मद्ध्वः पिबत मादयद्ध्वन्तृप्प्ता यात पथिभिर्द्देवयानैः ॥१८॥
आ मा वाजस्य प्प्रसवो जगम्म्यादेमे द्यावापृथिवी विश्श्वरूपे । आ मा गन्ताम्पितरा
मातरा चा मा सोमोऽअमृतत्त्वेन गम्म्यात् । वाजिनो वाजजितो वाजꣳ ससृवाꣳसो
बृहस्प्पतेर्ब्भागमवजिग्घ्रत निमृजानाः ॥१९॥

॥४॥ आपये स्वाहा स्वापये स्वाहापिजाय स्वाहा क्क्रतवे स्वाहा वसवे स्वाहाहर्प्पतये
स्वाहाह्ने मुग्ग्धाय स्वाहा मुग्ग्धाय वैनꣳशिनाय स्वाहा विनꣳशिनऽआन्त्यायनाय
स्वाहान्त्याय भौवनाय स्वाहा भुवनस्य पतये स्वाहाधिपतये स्वाहा ॥२०॥
आयुर्य्यज्ञेन कल्प्पताम्प्राणो यज्ञेन कल्प्पताञ्चक्षुर्य्यज्ञेन कल्प्पताꣳ श्रोत्रँ-
य्यज्ञेन कल्प्पताम्पृष्ठँय्यज्ञेन कल्प्पताँय्यज्ञो यज्ञेन कल्प्पताम् ।
प्रजापतेः प्प्रजाऽअभूम स्वर्द्देवाऽअगन्न्मामृताऽअभूम ॥२१॥
अस्म्मे वोऽअस्त्त्विन्द्रियमस्म्मे नृम्म्णमुत क्क्रतुरस्म्मे वर्च्चाꣳसि सन्तु वः । नमो मात्रे
पृथिव्यै नमो मात्रे पृथिव्याऽइयन्ते राड्यन्तासि यमनो द्ध्रुवोसि धरुणः । कृष्ष्यै त्वा
क्क्षेमाय त्वा रय्यै त्वा पोषाय त्वा ॥२२॥

॥५॥ वाजस्येमम्प्रसवः सुषुवेग्ग्रे सोमꣳ राजानमोषधीष्ष्वप्प्सु ।
ताऽअस्म्मभ्भ्यम्मधुमतीर्ब्भवन्तु वयꣳ राष्ट्रे जागृयाम पुरोहिताः स्वाहा ॥२३॥
वाजस्येमाम्प्रसवः शिश्श्रिये दिवमिमा च विश्श्वा भुवनानि सम्म्राट् ।
अदित्त्सन्तन्दापयति प्प्रजानन्त्स नो रयिꣳ सर्व्ववीरन्नियच्छतु स्वाहा ॥२४॥
वाजस्य नु प्प्रसवऽआबभूवेमा च विश्श्वा भुवनानि सर्व्वतः ।
सनेमि राजा परियाति विद्द्वान्प्रजाम्पुष्टिँवर्द्धयमानोऽअस्म्मे स्वाहा ॥२५॥
सोमꣳ राजानमवसेग्ग्निमन्न्वारभामहे ।
आदित्त्यान्विष्ष्णुꣳ सूर्य्यम्ब्रह्माणञ्च बृहस्प्पतिꣳ स्वाहा ॥२६॥
अर्य्यमणम्बृहस्प्पतिमिन्द्रन्दानाय चोदय ।
वाचँविष्ष्णुꣳ सरस्वतीꣳ सवितारञ्च वाजिनꣳ स्वाहा ॥२७॥
अग्ग्नेऽअच्छा वदेह नः प्प्रति नः सुमना भव ।
प्र नो यच्छ सहस्रजित्त्वꣳ हि धनदाऽअसि स्वाहा ॥२८॥
प्र नो यच्छत्त्वर्य्यमा प्प्र पूषा प्प्र बृहस्प्पतिः ।
प्र वाग्ग्देवी ददातु नः स्वाहा ॥२९॥
देवस्य त्त्वा सवितुः प्प्रसवेश्श्विनोर्ब्बाहुब्भ्याम्पूष्ष्णो हस्त्ताब्भ्याम् । सरस्वत्त्यै वाचो
यन्तुर्य्यन्त्रियै दधामि बृहस्प्पतेष्ट्वा साम्म्राज्ज्येनाभिषिञ्चाम्म्यसौ ॥३०॥

॥६॥ अग्ग्निरेकाक्क्षरेण प्प्राणमुदजयत्तमुज्जेषमश्श्विनौ द्व्यक्क्षरेण द्विपदो मनुष्ष्यानुदजय-
त्तान्तानुज्जेषँविष्ष्णुस्त्र्यक्क्षरेण त्रीँल्लोकानुदजयत्तानुज्जेषꣳ सोमश्चतुरक्क्षरेण चतु-
ष्प्पदः पशूनुदजयत्तानुज्जेषम्पूषा पञ्चाक्क्षरेण ॥३१॥
पूषा पञ्चाक्क्षरेण पञ्च दिशऽउदजयत्ताऽउज्जेषꣳ सविता षडक्क्षरेण षड्ऋतूनुदजयत्तानु-
ज्जेषम्मरुतः सप्प्ताक्क्षरेण सप्प्त ग्ग्राम्म्यान्पशूनुदजयँस्तानुज्जेषम्बृहस्प्पतिरष्ष्टाक्क्ष-
रेण गायत्रीमुदजयत्तामुज्जेषम्मित्रो नवाक्क्षरेण ॥३२॥
मित्रो नवाक्क्षरेण त्रिवृतꣳ स्तोममुदजयत्तमुज्जेषँवरुणो दशाक्क्षरेण विराजमुद-
जयत्तामुज्जेषमिन्द्रऽएकादशाक्क्षरेण त्रिष्ष्टुभमुदजयत्तामुज्जेषँविश्श्वे देवा द्वादशा-
क्क्षरेण जगतीमुदजयँस्तामुज्जेषँवसवस्त्रयोदशाक्क्षरेण ॥३३॥
वसवस्त्रयोदशाक्क्षरेण त्रयोदशꣳ स्तोममुदजयँस्तमुज्जेषꣳ रुद्राश्चतुर्द्दशाक्क्षरेण
चतुर्द्दशꣳ स्तोममुदजयँस्तमुज्जेषमादित्त्याः पञ्चदशाक्क्षरेण पञ्चदशꣳ स्तोममुदजयँ-
स्तमुज्जेषमदितिः षोडशाक्क्षरेण षोडशꣳ स्तोममुदजयत्तमुज्जेषम्प्रजापतिः सप्प्त-
दशाक्क्षरेण सप्प्तदशꣳ स्तोममुदजयत्तमुज्जेषम् ॥३४॥

॥७॥ एष ते निर्ऋते भागस्त्तञ्जुषस्व स्वाहाग्ग्निनेत्रेब्भ्यो देवेब्भ्यः पुरःसद्भ्यः स्वाहा
यमनेत्रेब्भ्यो देवेब्भ्यो दक्क्षिणासद्भ्यः स्वाहा विश्श्वदेवनेत्रेब्भ्यो देवेब्भ्यः पश्चा-
त्सद्भ्यः स्वाहा मित्रावरुणनेत्रेब्भ्यो वा मरुन्नेत्रेब्भ्यो वा देवेब्भ्यऽउत्तरासद्भ्यः
स्वाहा सोमनेत्रेब्भ्यो देवेब्भ्यऽउपरिसद्भ्यो दुवस्वद्भ्यः स्वाहा ॥३५॥
ये देवाऽअग्ग्निनेत्राः पुरःसदस्त्तेब्भ्यः स्वाहा ये देवा यमनेत्रा दक्क्षिणासदस्त्ते-
ब्भ्यः स्वाहा ये देवा विश्श्वदेवनेत्राः पश्चात्त्सदस्त्तेब्भ्यः स्वाहा ये देवा मित्रावरुण-
नेत्रा वा मरुन्नेत्रा वोत्तरासदस्त्तेब्भ्यः स्वाहा ये देवाः सोमनेत्राऽउपरिसदो दुवस्वन्त-
स्त्तेब्भ्यः स्वाहा ॥३६॥
अग्ग्ने सहस्व पृतनाऽअभिमातीरपास्य । दुष्ष्टरस्त्तरन्नरातीर्व्वर्च्चोधा यज्ञवाहसि ॥३७॥

देवस्य त्त्वा सवितुः प्प्रसवेश्विनोर्ब्बाहुब्भ्याम्पूष्ष्णो हस्त्ताब्भ्याम् । उपाᳬशोर्व्वीर्य्येण
जुहोमि हतᳬ रक्क्षः स्वाहा रक्क्षसान्त्वा वधायावधिष्म्म रक्क्षोवधिष्म्मामुमसौ
हतः ॥३८॥

॥८॥ सविता त्त्वा सवानाᳬ सुवतामग्ग्निर्गृहपतीनाᳬ सोमो वनस्प्पतीनाम् । बृहस्प्पति-
र्व्वाचऽइन्द्रो ज्ज्यैष्ठ्याय रुद्रः पशुब्भ्यो मित्रः सत्त्यो वरुणो धर्म्मपतीनाम् ॥३९॥
इमन्देवाऽअसपत्त्नᳬ सुवद्ध्वम्महते क्क्षत्राय महते ज्ज्यैष्ठ्याय महते जानराज्ज्यायेन्द्रस्ये-
न्द्रियाय । इममुमुष्ष्य पुत्रममुष्ष्यै पुत्रमस्यै विशऽएष वोमी राजा सोमोस्म्माक-
म्ब्राह्मणानाᳬ राजा ॥४०॥

॥ इति नवमोऽध्यायः ॥

---

# अथ दशमोऽध्यायः

ऋषिः (१) 'अपो देवाः' इत्यारभ्य (३०) 'सवित्रा प्रसवित्रा' इत्यन्तानां, (३१) 'वायुः पूतः' इत्यारभ्य (३४) 'पुत्रमिव' इत्यन्तानाञ्च सामान्यतो वरुण ऋषिः । विशेषतश्च—(२२) 'मा ते' इत्यस्य प्राजापत्यः संवरणः, (२४) 'हᳬसः शुचिषद्' इत्यस्य वामदेवः, (२७) 'निषसाद धृतव्रतः' इत्यस्य शुनःशेपः, (३१) 'अश्विभ्याम्पच्यस्व' इत्यारभ्य (३४) 'पुत्रमिव पितरौ' इत्यन्तानामश्विनौ, तत्रापि—(३२) 'कुविदङ्ग यवमन्तः' इत्यादित्रियाणां काक्षीवतः सुकीर्तिः ॥

देवता (१) 'अपो देवाः' इत्यस्यापः ।

(२) 'वृष्ण ऊर्मिरसि' इत्यादिद्वयोः, 'वृषसेनोसि' इत्यादिद्वयोः, (३) 'अर्थेत स्थ' इत्यादिद्वयोः, 'ओजस्वती स्थः' इत्यादिद्वयोः, 'आपः परिवाहिणीः' इत्यादिद्वयोः, 'अपाम्पतिः' इत्यादिद्वयोः, 'अपाङ्गर्भः' इत्यादिद्वयोः, (४) 'सूर्यत्वचसः' इत्यादिद्वयोः, 'सूर्यवर्चसः' इत्यादिद्वयोः, 'मान्दाः' इत्यादिद्वयोः, 'व्रजक्षितः' इत्यादिद्वयोः, 'वाशा स्थ' इत्यादिद्वयोः, 'शविष्ठा स्थ' इत्यादिद्वयोः, 'शक्करी स्थ' इत्यादिद्वयोः, 'जनभृत स्थ' इत्यादिद्वयोः, 'विश्वभृत स्थ' इत्यादिद्वयोः, 'अपः स्वराजः' इत्यस्य च लिङ्गोक्ता, 'मधुमतीर्मधुमतीभिः' 'अनाधृष्टाः सीदत' इत्यनयोरापः ।

(५) 'सोमस्य त्विषिः' इत्यस्य चर्म, 'अग्नये स्वाहा' इत्यादिस्वाहान्तानां द्वादशानां, (६) 'पवित्रे स्थः' इत्यस्य च लिङ्गोक्ता, 'सवितुर्वः' 'अनिभृष्टमसि' इत्यनयोरापः ।

(७) 'सधमादो द्युम्निनीः' इत्यस्य वरुणः ।

(८) 'क्षत्रस्योल्बम्' इत्यादिचतुर्णां क्रमेण तार्प्यपाण्ड्वाधीवासउष्णीषाणि, 'इन्द्रस्य वार्त्रघ्नम्' इत्यस्य धनुः, 'मित्रस्यासि' 'वरुणस्यासि' इत्यनयोर्बाहू, 'त्वयायम्' इत्यस्य धनुः, 'इवासि' 'रुजासि' 'क्षुमासि' 'पातैनम्प्राञ्चम्' 'पातैनम्प्रत्यञ्चम्' 'पातैनन्तिर्यञ्चम्' इत्येषामिषवः ।

(९) 'आविर्मर्याः' इत्यस्य प्रजापतिः, 'आवित्तो अग्निः' 'आवित्त इन्द्रः' 'आवित्तौ मित्रावरुणौ' 'आवित्तः पूषा' 'आवित्ते द्यावापृथिवी' 'आवित्तादितिः' इत्येषां लिङ्गोक्ता ।

(१०) 'अवेष्टा दन्दशूकाः' इत्यस्य मृत्युहा, 'प्राचीमारोह' (११) 'दक्षिणामारोह' (१२) 'प्रतीचीमारोह' (१३) 'उदीचीमारोह' (१४) 'ऊर्ध्वामारोह' इत्येषां यजमानः, 'प्रत्यस्तन्नमुचेः' इत्यस्यासुरः ।

(१५) 'सोमस्य त्विषिः' इत्यस्य चर्म, 'मृत्योः पाहि' 'ओजोसि' इत्यनयो रुक्मः ।

(१६) 'हिरण्यरूपा उषसः' 'मित्रोसि' इत्यनयोर्मित्रावरुणौ ।

(१७) 'सोमस्य त्वा' 'अग्नेर्भ्राजसा' 'सूर्यस्य वर्चसा' 'इन्द्रस्येन्द्रियेण' (१८) 'इमन्देवाः' इत्येषां सुन्वन्यजमानः ।

(१९) 'प्र पर्वतस्य' इत्यस्यापः, 'विष्णोर्विक्रमणम्' 'विष्णोर्विक्रान्तम्' 'विष्णोः क्रान्तम्' इत्येषां लिङ्गोक्ता ।

(२०) 'प्रजापते न' इत्यस्य प्रजापतिः, 'रुद्र यत्ते' इत्यस्य रुद्रः ।

(२१) 'इन्द्रस्य वज्रः' 'मित्रावरुणयोः' 'अव्यथायै त्वा' 'मरुताम्प्रसवेन' 'अपाम मनसा' 'समिन्द्रियेण' इत्येषां लिङ्गोक्ता ।

(२२) 'मा ते' इत्यस्येन्द्रः ।

(२३) 'अग्नये गृहपतये' 'सोमाय वनस्पतये' 'मरुतामोजसे' 'इन्द्रस्येन्द्रियाय' इत्येषां लिङ्गोक्ता, 'पृथिवि मातः' इत्यस्य भूमिः ।

(२४) 'हᳬसः शुचिषद्' इत्यस्य सूर्यः ।

(२५) 'इयदसि' 'युङ्ङसि' इत्यनयोः शतमानौ, 'ऊर्गसि' इत्यस्य शाखा, 'इन्द्रस्य वाम्' इत्यस्य बाहू ।

(२६) 'स्योनासि' इत्यस्यासन्दी, 'क्षत्रस्य योनिः' इत्यस्याधीवासम्, 'स्योनामासीद' इत्यस्य सुन्वन्यजमानः ।

(२७) 'निषसाद धृतव्रतः' इत्यस्य वरुणः ।

(२८) 'अभिभूरसि' इत्यस्याक्षा यजमानो वा, 'ब्रह्माँस्त्वम्' 'वरुणोसि' 'इन्द्रोसि' 'रुद्रोसि' 'बहुकार श्रेयस्कर' इत्येषां लिङ्गोक्ता, 'इन्द्रस्य वज्रः' इत्यस्य स्फ्यः ।

(२९) 'अग्निः पृथुः' इत्यस्याग्निः, 'स्वाहाकृताः' इत्यस्याक्षाः ।

(३०) 'सवित्रा प्रसवित्रा' (३१) 'अश्विभ्याम्पच्यस्व' 'सरस्वत्यै पच्यस्व' 'इन्द्राय सुत्राम्णे' इत्येषां लिङ्गोक्ता, 'वायुः पूतः' इत्यस्य सोमः ।

(३२) 'कुविदङ्ग यवमन्तः' इत्यस्य सोमः, 'उपयाम० अश्विभ्यान्त्वा' इत्यस्य ग्रहः ।

(३३) 'युवᳬ सुरामम्' (३४) 'पुत्रमिव पितरौ' इत्यनयोरश्विसरस्वतीन्द्राः ॥

छन्दः (१) 'अपो देवाः' (७) 'सधमादो द्युम्निनीः' (१६) 'हिरण्यरूपा उषसः' इत्येषां त्रिष्टुप्, अन्त्ये 'मित्रोसि' इति यजुः, (१८) 'इमन्देवाः' इत्यस्यात्यष्टिः, (१९) 'प्र पर्वतस्य' (२०) 'प्रजापते न' (२२) 'मा ते' इत्येषां त्रिष्टुप्, द्वितीये 'अयममुष्य' इति यजुः, (२४) 'हᳬसः शुचिषद्' इत्यस्यातिजगती, (२७) 'निषसाद धृतव्रतः' (३१) 'वायुः पूतः' इत्यनयोर्गायत्री, (३२) 'कुविदङ्ग यवमन्तः' इत्यस्य त्रिष्टुप्, (३३) 'युवᳬ सुरामम्' इत्यस्यानुष्टुप्, (३४) 'पुत्रमिव पितरौ' इत्यस्य त्रिष्टुप् ॥

॥ हरिःॐ ॥

॥१॥ अपो देवा मधुमतीरगृब्भ्णन्नूर्ज्जस्वती राजस्वश्चितानाः ।
याभिर्म्मित्रावरुणावब्भ्यषिञ्चन्याभिरिन्द्रमनयन्नत्त्यरातीः ॥१॥
वृष्ष्णऽऊर्म्मिरसि राष्ट्रदा राष्ट्रम्मे देहि स्वाहा वृष्ष्णऽऊर्म्मिरसि राष्ट्रदा राष्ट्रम-
मुष्म्मै देहि वृषसेनोसि राष्ट्रदा राष्ट्रम्मे देहि स्वाहा वृषसेनोसि राष्ट्रदा राष्ट्रम-
मुष्म्मै देह्यर्त्थेत स्त्थ ॥२॥
अर्त्थेत स्त्थ राष्ट्रदा राष्ट्रम्मे दत्त स्वाहार्त्थेत स्त्थ राष्ट्रदा राष्ट्रममुष्म्मै दत्तौजस्वती
स्त्थ राष्ट्रदा राष्ट्रम्मे दत्त स्वाहौजस्वती स्त्थ राष्ट्रदा राष्ट्रममुष्म्मै दत्तापः परि-
वाहिणी स्त्थ राष्ट्रदा राष्ट्रम्मे दत्त स्वाहापः परिवाहिणी स्त्थ राष्ट्रदा राष्ट्रममुष्म्मै
दत्तापाम्पतिरसि राष्ट्रदा राष्ट्रम्मे देहि स्वाहापाम्पतिरसि राष्ट्रदा राष्ट्रममुष्म्मै
देह्यपाङ्गब्भोसि राष्ट्रदा राष्ट्रम्मे देहि स्वाहापाङ्गब्भोसि राष्ट्रदा राष्ट्रममुष्म्मै
देहि सूर्य्यत्त्वचस स्त्थ ॥३॥

सूर्य्यत्वचस स्थ राष्ट्रदा राष्ट्रम्मे दत्त स्वाहा सूर्य्यत्वचस स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त सूर्य्यवर्चस स्थ राष्ट्रदा राष्ट्रम्मे दत्त स्वाहा सूर्य्यवर्चस स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त मान्दा स्थ राष्ट्रदा राष्ट्रम्मे दत्त स्वाहा मान्दा स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त व्रजक्षित स्थ राष्ट्रदा राष्ट्रम्मे दत्त स्वाहा व्रजक्षित स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त वाशा स्थ राष्ट्रदा राष्ट्रम्मे दत्त स्वाहा वाशा स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त शविष्ठा स्थ राष्ट्रदा राष्ट्रम्मे दत्त स्वाहा शविष्ठा स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त शक्वरी स्थ राष्ट्रदा राष्ट्रम्मे दत्त स्वाहा शक्वरी स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त जनभृत स्थ राष्ट्रदा राष्ट्रम्मे दत्त स्वाहा जनभृत स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त विश्वभृत स्थ राष्ट्रदा राष्ट्रम्मे दत्त स्वाहा विश्वभृत स्थ राष्ट्रदा राष्ट्रममुष्मै दत्तापः स्वराज स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त । मधुमतीर्म्मधुमतीभिः पृच्यन्ताम्महि क्षत्रङ्क्षत्रियाय वन्वानाऽअनाधृष्टाः सीदत सहौजसो महि क्षत्रङ्क्षत्रियाय दधतीः ॥४॥

॥२॥ सोमस्य त्विषिरसि तवेव मे त्विषिर्भूयात् । अग्नये स्वाहा सोमाय स्वाहा सवित्रे
स्वाहा सरस्वत्यै स्वाहा पूष्णे स्वाहा बृहस्पतये स्वाहेन्द्राय स्वाहा घोषाय स्वाहा
श्लोकाय स्वाहाꣳशाय स्वाहा भगाय स्वाहार्य्यम्णे स्वाहा ॥५॥

पवित्रे स्थो वैष्णव्यौ सवितुर्वः प्रसवऽउत्पुनाम्म्यच्छिद्रेण पवित्रेण सूर्य्यस्य रश्मिभिः । अनिभृष्टमसि वाचो बन्धुस्तपोजाः सोमस्य दात्रमसि स्वाहा राजस्वः ॥६॥

सधमादो द्युम्निनीरापऽएताऽअनाधृष्टाऽअपस्यो वसानाः ।
पस्त्यासु चक्रे वरुणः सधस्थमपाꣳ शिशुर्म्मातृतमास्वन्तः ॥७॥

क्षत्रस्योल्बमसि क्षत्रस्य जराय्वसि क्षत्रस्य योनिरसि क्षत्रस्य नाभिरसीन्द्रस्य वार्त्रघ्नमसि मित्रस्यासि वरुणस्यासि त्वयायं वृत्रं वधेत् । दृवासि रुजासि क्षुमासि । पातैनम्प्राञ्चम्पातैनम्प्रत्यञ्चम्पातैनन्तिर्य्यञ्चन्दिग्भ्यः पात ॥८॥

आविर्म्मर्य्याऽआवित्तोऽअग्निर्गृहपतिरावित्तऽइन्द्रो वृद्धश्रवाऽआवित्तौ मित्रावरुणौ धृतव्रतावावित्तः पूषा विश्ववेदाऽआवित्ते द्यावापृथिवी विश्वशम्भुवावावित्तादितिरुरुशर्म्मा ॥९॥

॥३॥ अवेष्टा दन्दशूकाः प्राचीमारोह गायत्री त्वावतु रथन्तरꣳ साम त्रिवृत्स्तोमो
वसन्तऽऋतुर्ब्रह्म द्रविणन्दक्षिणामारोह ॥१०॥

दक्षिणामारोह त्रिष्टुप्त्वावतु बृहत्साम पञ्चदश स्तोमो ग्रीष्मऽऋतुः क्षत्रन्द्रविणम्प्रतीचीमारोह ॥११॥

प्रतीचीमारोह जगती त्वावतु वैरूपꣳ साम सप्तदश स्तोमो वर्षाऽऋतुर्विड्द्रविणमुदीचीमारोह ॥१२॥

उदीचीमारोहानुष्टुप्त्वावतु वैराजꣳ सामैकविꣳश स्तोमः शरदृतुः फलन्द्रविणमूर्द्ध्वामारोह ॥१३॥

ऊर्द्ध्वामारोह पङ्क्तिस्त्वावतु शाक्वररैवते सामनी त्रिणवत्रयस्त्रिꣳशौ स्तोमौ हेमन्तशिशिरावृतू वर्च्चो द्रविणम्प्रत्यस्तन्नमुचेः शिरः ॥१४॥

सोमस्य त्विषिरसि तवेव मे त्विषिर्भूयात् ।
मृत्योः पाह्योजोसि सहोस्यमृतमसि ॥१५॥

हिरण्यरूपाऽउषसो विरोकऽउभाविन्द्राऽउदिथः सूर्य्यश्च ।
आरोहतं वरुण मित्र गर्त्तन्ततश्चक्षाथामदितिन्दितिञ्च मित्रोसि वरुणोसि ॥१६॥

॥४॥ सोमस्य त्वा द्युम्नेनाभिषिञ्चाम्म्यग्नेर्भ्राजसा सूर्य्यस्य वर्च्चसेन्द्रस्येन्द्रियेण ।
क्षत्राणाङ्क्षत्रपतिरेध्यति दिद्यून्पाहि ॥१७॥

इमन्देवाऽअसपत्नꣳ सुवद्ध्वम्महते क्षत्राय महते ज्यैष्ठ्याय महते जानराज्यायेन्द्रस्येन्द्रियाय । इमममुष्य पुत्रममुष्यै पुत्रमस्यै विशऽएष वोमी राजा सोमोस्माकम्ब्राह्मणानाꣳ राजा ॥१८॥

प्र पर्वतस्य वृषभस्य पृष्ठान्नावश्चरन्ति स्वसिचऽइयानाः । ताऽआववृत्रन्नधरागुदक्ताऽअहिम्बुध्न्यमनु रीयमाणाः । विष्णोर्विक्रमणमसि विष्णोर्विक्रान्तमसि विष्णोः क्रान्तमसि ॥१९॥

प्रजापते न त्वदेतान्यन्यो विश्वा रूपाणि परि ता बभूव । यत्कामास्ते जुहुमस्तन्नोऽअस्त्वयममुष्य पितासावस्य पिता वयꣳ स्याम पतयो रयीणाꣳ स्वाहा । रुद्र यत्ते क्रिवि परन्नाम तस्मिन्हुतमस्यमेष्टमसि स्वाहा ॥२०॥

॥५॥ इन्द्रस्य वज्रोसि मित्रावरुणयोस्त्वा प्रशास्त्रोः प्रशिषा युनज्मि । अव्यथायै त्वा
स्वधायै त्वारिष्टोऽअर्जुनो मरुताम्प्रसवेन जयापाम मनसा समिन्द्रियेण ॥२१॥

मा तऽइन्द्र ते वयन्तुराषाडयुक्तासोऽअब्रह्मता विदसाम ।
तिष्ठा रथमधि यं वज्रहस्ता रश्मीन्देव यमसे स्वश्वान् ॥२२॥

अग्नये गृहपतये स्वाहा सोमाय वनस्पतये स्वाहा मरुतामोजसे स्वाहेन्द्रस्येन्द्रियाय
स्वाहा । पृथिवि मातर्म्मा मा हिꣳसीर्म्मोऽअहन्त्वाम् ॥२३॥
हꣳसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् । नृषद्वरसदृतसद्व्योम-
सदब्जा गोजाऽऋतजाऽअद्रिजाऽऋतम्बृहत् ॥२४॥
इयदस्यायुरस्यायुर्म्मयि धेहि युङ्ङसि वर्च्चोसि वर्च्चो मयि धेह्यूर्ग्गस्यूर्ज्जम्मयि धेहि ।
इन्द्रस्य वाँव्वीर्य्यकृतो बाहूऽअभ्युपावहरामि ॥२५॥
॥६॥ स्योनासि सुषदासि क्षत्रस्य योनिरसि ।
स्योनामासीद सुषदामासीद क्षत्रस्य योनिमासीद ॥२६॥
निषसाद धृतव्व्रतो वरुणः पस्त्यास्वा । साम्म्राज्याय सुक्क्रतुः ॥२७॥
अभिभूरस्येतास्ते पञ्च दिशः कल्पन्ताम्ब्रह्मँस्त्वम्ब्रह्मासि सवितासि सत्यप्प्रसवो
वरुणोसि सत्यौजाऽइन्द्रोसि विशौजा रुद्रोसि सुशेवः । बहुकार श्श्रेयस्कर भूयस्क-
रेन्द्रस्य वज्रोसि तेन मे रद्ध्य ॥२८॥
अग्निः पृथुर्द्धर्म्मणस्पतिर्ज्जुषाणोऽअग्निः पृथुर्द्धर्म्मणस्पतिराज्ज्यस्य वेतु स्वाहा
स्वाहाकृताः सूर्य्यस्य रश्मिभिर्य्यतद्ध्वꣳ सजातानाम्मद्ध्यमेष्ठ्याय ॥२९॥
॥७॥ सवित्रा प्प्रसवित्रा सरस्वत्या वाचा त्वष्ट्रा रूपैः पूष्णा पशुभिरिन्द्रेणास्म्मे
बृहस्प्पतिना ब्रह्मणा वरुणेनौजसाग्निना तेजसा सोमेन राज्ञा विष्णुना दशम्म्या
देवतया प्प्रसूतः प्प्रसर्प्पामि ॥३०॥
॥८॥ अश्विभ्याम्पच्यस्व सरस्वत्यै पच्यस्वेन्द्राय सुत्राम्णे पच्यस्व । वायुः पूतः पवित्रेण
प्प्रत्यङ्क्सोमोऽअतिस्रुतः । इन्द्रस्य युज्ज्यः सखा ॥३१॥
कुविदङ्ग यवमन्तो यवञ्चिद्यथा दान्त्यनुपूर्व्वँव्वियूय । इहेहैषाङ्कृणुहि भोजनानि ये
बर्हिषो नमऽउक्तिँय्यजन्ति । उपयामगृहीतोस्यश्विभ्यान्त्वा सरस्वत्यै त्वेन्द्राय
त्वा सुत्राम्णे ॥३२॥
युवꣳ सुराममश्विना नमुचावासुरे सचा । विपिपाना शुभस्प्पतीऽइन्द्रङ्कर्म्मस्वा-
वतम् ॥३३॥
पुत्रमिव पितरावश्विनोभेन्द्रावथुः काव्यैर्दꣳसनाभिः । यत्सुरामँव्यपिबः शचीभिः
सरस्वती त्वा मघवन्नभिष्णक् ॥३४॥

॥ इति दशमोऽध्यायः ॥



# अथैकादशोऽध्यायः

ऋषिः (१) 'युञ्जानः प्रथमम्' इत्यारभ्य (८३) 'अन्नपतेन्नस्य' इत्यन्तानां सामान्यतः प्रजापतिः साध्या वा ऋषयः । विशेषतश्च—

(१) 'युञ्जानः प्रथमम्' इत्यारभ्य (८) 'ऋचा स्तोमम्' इत्यन्तानां सविता, (१२) 'प्रतूर्तं वाजिन्' इत्यस्य नाभानेदिष्ठः, (१३) 'युञ्जाथां रासभम्' इत्यस्य कुश्रिः, (१४) 'योगेयोगे' इत्यस्य शुनःशेपः, (१७) 'अन्वग्निरुषसाम्' इत्यस्य पुरोधसः, (१८) 'आगत्य वाजी' इत्यस्य मयोभुवः, (२३) 'आ त्वा' (२४) 'आ विश्वतः' इत्यनयोर्गृत्समदः, (२५) 'परि वाजपतिः' इत्यस्य सोमकः, (२६) 'परि त्वाग्ने' इत्यस्य पायुः, (२७) 'त्वमग्ने' इत्यस्य गृत्समदः, (३२) 'त्वामग्ने' (३३) 'तमु त्वा दध्यङ्' (३४) 'तमु त्वा पाथ्यः' इत्येषां भरद्वाजः, (३५) 'सीद होतः' इत्यस्य देवश्रवोदेववातौ, (३६) 'नि होता' इत्यस्य गृत्समदः, (३७) 'सꣳसीदस्व' इत्यस्य प्रस्कण्वः, (३८) 'अपो देवीः' इत्यस्य सिन्धुद्वीपः, (४१) 'उदु तिष्ठ' इत्यस्य विश्वमनाः, (४२) 'ऊर्ध्व ऊ षु' इत्यस्य कण्वः, (४३) 'स जातः' इत्यस्य त्रितः, (४९) 'वि पाजसा' इत्यस्य कात्य उत्कीलः, (५०) 'आपो हि ष्ठा' (५१) 'यो वः' (५२) 'तस्मा अरम्' इत्येषां सिन्धुद्वीपः, (६२) 'मित्रस्य चर्षणीधृतः' इत्यस्य विश्वामित्रः, (६७) 'विश्वो देवस्य' इत्यस्य स्वस्त्यात्रेयः, (७०) 'द्रुन्नः सर्पिः' इत्यस्य सोमाहुतिः, (७१) 'परस्या अधि' इत्यस्याङ्गिरसो विरूपः, (७२) 'परमस्याः' इत्यस्यारुणिः, (७३) 'यदग्ने कानि' (७४) 'यदत्त्युपजिह्विका' इत्यनयोर्जमदग्निः, (७५) 'अहरहः' (७६) 'नाभा पृथिव्याः' इत्यनयोर्नाभानेदिष्ठः ॥

देवता (१) 'युञ्जानः प्रथमम्' (२) 'युक्तेन मनसा' (३) 'युक्त्वाय सविता' (४) 'युञ्जते मनः' (५) 'युजे वाम्' (६) 'यस्य प्रयाणम्' (७) 'देव सवितः' (८) 'इमन्नो देव' (९) 'देवस्य त्वा' इत्येषां सविता, 'आददे गायत्रेण' (१०) 'अभ्रिरसि' (११) 'हस्त आधाय' इत्येषामभ्रिः ।

(१२) 'प्रतूर्तं वाजिन्' इत्यस्याश्वः ।
(१३) 'युञ्जाथाꣳ रासभम्' इत्यस्य रासभः ।
(१४) 'योगेयोगे' इत्यस्य अजः ।
(१५) 'प्र तूर्वन्नेहि' इत्यस्याश्वः, 'उर्वन्तरिक्षम्' 'स्वस्ति गव्यूतिः' इत्यनयो रासभः ।
(१६) 'पृथिव्याः सधस्थात्' 'अग्निम्पुरीष्यम्' इत्यादिद्वयोः, (१७) 'अन्वग्निरुषसाम्' इत्यस्य चाग्निः ।
(१८) 'आगत्य वाजी' (१९) 'आक्रम्य वाजिन्' (२०) 'द्यौस्ते पृष्ठम्' (२१) 'उत्क्राम महते' (२२) 'उदक्रमीत्' इत्येषामश्वः ।
(२३) 'आ त्वा जिघर्मि' (२४) 'आ विश्वतः' (२५) 'परि वाजपतिः' (२६) 'परि त्वाग्ने' (२७) 'त्वमग्ने' इत्येषामग्निः ।
(२८) 'देवस्य त्वा' इत्यस्य सविता, 'पृथिव्याः सधस्थात्' इत्यस्याग्निः ।
(२९) 'अपाम्पृष्ठम्' इत्यस्य पुष्करपर्णम् ।
(३०) 'शर्म च स्थः' इत्यस्य कृष्णाजिनम् ।
(३१) 'संवसाथाम्' इत्यस्य पुष्करपर्णम् ।
(३२) 'पुरीष्योसि' 'त्वामग्ने' (३३) 'तमु त्वा दध्यङ्' (३४) 'तमु त्वा पाथ्यः' (३५) 'सीद होतः' (३६) 'नि होता' (३७) 'सꣳसीदस्व' इत्येषामग्निः ।
(३८) 'अपो देवीः' इत्यस्यापः ।
(३९) 'सन्ते वायुः' इत्यस्य पृथ्वी, 'यो देवानाम्' इत्यस्य वायुः ।
(४०) 'सुजातो ज्योतिषा' (४१) 'उदु तिष्ठ' (४२) 'ऊर्ध्व ऊ षु' इत्येषामग्निः ।
(४३) 'स जातः' इत्यस्याश्वः ।
(४४) 'स्थिरो भव' इत्यस्य रासभः ।
(४५) 'शिवो भव' इत्यस्य अजः ।

(४६) 'प्रैतु वाजी' इत्यस्य लिङ्गोक्ता, 'वृषाग्निम्' इत्यस्य गर्दभः, 'अग्न आयाहि' (४७) 'ऋतꣳ सत्यम्' 'अग्निम्पु-रीष्यम्' इत्येषामग्निः, 'ओषधयः प्रतिमोदध्वम्' इत्यस्यौषधिः, 'व्यस्यन् विश्वा' इत्यस्याग्निः ।
(४८) 'ओषधयः प्रतिगृभ्णीत' इत्यस्यौषधिः ।
(४९) 'वि पाजसा' इत्यस्याग्निः ।
(५०) 'आपो हि ष्ठाः' (५१) 'यो वः' (५२) 'तस्मा अरम्' इत्येषामापः ।
(५३) 'मित्रः सꣳसृज्य' इत्यस्य मित्रः ।
(५४) 'रुद्राः सꣳसृज्य' इत्यस्य रुद्रः ।
(५५) 'सꣳसृष्टा वसुभिः' (५६) 'सिनीवाली' इत्यनयोः सिनीवाली ।
(५७) 'उखाङ्कृणोतु' इत्यस्यादितिः, 'मखस्य शिरोसि' इत्यस्य मृत्पिण्डः ।
(५८) 'वसवस्त्वा' 'रुद्रास्त्वा' 'आदित्यास्त्वा' 'विश्वे त्वा' इत्येषां लिङ्गोक्ता ।
(५९) 'अदित्यै रास्नासि' इत्यस्य रास्ना, 'अदितिष्टे' इत्यस्य उखा, 'कृत्वाय सा' इत्यस्यादितिः ।
(६०) 'वसवस्त्वा' 'रुद्रास्त्वा' 'आदित्यास्त्वा' 'विश्वे त्वा' 'इन्द्रस्त्वा' 'वरुणस्त्वा' 'विष्णुस्त्वा' इत्येषां लिङ्गोक्ता ।
(६१) 'अदितिष्ट्वा' इत्यस्यावटः, 'देवानान्त्वा' 'धिषणास्त्वा' 'वरूत्रीष्ट्वा' 'ग्नास्त्वा' 'जनयस्त्वा' इत्येषामुखा ।
(६२) 'मित्रस्य चर्षणीधृतः' इत्यस्य मित्रः ।
(६३) 'देवस्त्वा' इत्यस्य सविता ।
(६४) 'उत्थाय बृहती' इत्यस्य उखा, 'मित्रैतान्ते' इत्यस्य मित्रः ।
(६५) 'वसवस्त्वा' 'रुद्रास्त्वा' 'आदित्यास्त्वा' 'विश्वे त्वा' (६६) 'आकूतिमग्निम्' 'मनो मेधाम्' 'चित्तं विज्ञातम्' 'वाचो विधृतिम्' 'प्रजापतये मनवे' 'अग्नये वैश्वानराय' (६७) 'विश्वो देवस्य' इत्येषां लिङ्गोक्ता ।
(६८) 'मा सु भित्था' इत्यस्य उखा, 'अग्निश्चेदम्' इत्यस्याग्निः ।
(६९) 'दृꣳहस्व देवि' इत्यस्य उखा ।
(७०) 'द्रुन्नः सर्पिः' (७१) 'परस्या अधि' (७२) 'परमस्याः' (७३) 'यदग्ने कानि' (७४) 'यदत्ति' (७५) 'अहरहः' (७६) 'नाभा पृथिव्याः' (७७) 'याः सेनाः' (७८) 'दꣳष्ट्राभ्याम्मलिम्लून्' (७९) 'ये जनेषु' (८०) 'यो अस्मभ्यम्' (८१) 'सꣳशितम्मे' (८२) 'उदेषाम्बाहू' (८३) 'अन्नपतेन्नस्य' इत्येषामग्निः ॥

छन्दः (१) 'युञ्जानः प्रथमम्' इत्यस्यानुष्टुप्, (२) 'युक्तेन मनसा' इत्यस्य गायत्री, (३) 'युक्त्वाय सविता' इत्यस्यानुष्टुप्, (४) 'युञ्जते मनः' इत्यस्य जगती, (५) 'युजे वाम्' इत्यस्य त्रिष्टुप्, (६) 'यस्य प्रयाणम्' इत्यस्य जगती, (७) 'देव सवितः' इत्यस्य त्रिष्टुप्, (८) 'ऋचा स्तोमम्' इत्यस्य गायत्री, 'स्वाहा' इति यजुः, (११) 'हस्त आधाय' इत्यस्यानुष्टुप्, 'आनुष्टुभेन' इति यजुः, (१२) 'प्रतूर्तं वाजिन्' इत्यस्यास्तारपङ्क्तिः, (१३) 'युञ्जाथाꣳ रासभम्' (१४) 'योगेयोगे' इत्यनयोर्गायत्री, (१५) 'प्रतूर्वन्नेहि' इत्यस्य विराड्रूपा त्रिष्टुप्, मध्ये 'उर्वन्तरिक्षं वीहि' इति यजुः, (१७) 'अन्वग्निरुषसाम्' इत्यस्य त्रिष्टुप्, (१८) 'आगत्य वाजी' (१९) 'आक्रम्य वाजिन्' इत्यनयोरनुष्टुप्, (२०) 'द्यौस्ते' इत्यस्य बृहती, (२१) 'उत्क्राम महते' इत्यस्य विराट्, (२२) 'उदक्रमीत्' (२३) 'आ त्वा जिघर्मि' (२४) 'आ विश्वतः' इत्येषां त्रिष्टुप्, (२५) 'परि वाजपतिः' इत्यस्य गायत्री, (२६) 'परि त्वाग्ने' इत्यस्यानुष्टुप्, (२७) 'त्वमग्ने' इत्यस्य जगती, (२९) 'अपाम्पृष्ठम्' इत्यस्य स्वराट्पङ्क्तिः, (३०) 'शर्म च स्थः' (३१) 'संवसाथाम्' इत्यनयोरनुष्टुप्, 'त्वामग्ने' (३३) 'तमु त्वा दध्यङ्' (३४) 'तमु त्वा पाथ्यः' इत्येषां गायत्री, (३५) 'सीद होतः' (३६) 'नि होता' इत्यनयोस्त्रिष्टुप्, (३७) 'सꣳसीदस्व' इत्यस्य बृहती, (३८) 'अपो देवीः' इत्यस्य न्यङ्कुसारिणी, (३९) 'सन्ते' इत्यस्य त्रिष्टुप्, (४०) 'सुजातो ज्योतिषा' इत्यस्यानुष्टुप्, (४१) 'उदु तिष्ठ' इत्यस्य पथ्याबृहती, (४२) 'ऊर्ध्व ऊ षु' इत्यस्योपरिष्टाद्बृहती, (४३) 'स जातः' इत्यस्य त्रिष्टुप्, (४४) 'स्थिरो भव' इत्यस्यानुष्टुबुष्णिग्वा, (४५) 'शिवो भव' इत्यस्य पथ्या-बृहती, (४६) 'प्रैतु वाजी' इत्यस्य महापङ्क्तिः, 'अग्न आयाहि' इत्यस्यैकपदा गायत्री, (४७) 'ओषधयः प्रति-मोदध्वम्' इत्यस्य त्रिष्टुप्, (४८) 'ओषधयः प्रतिगृभ्णीत' इत्यस्यानुष्टुप्, (४९) 'वि पाजसा' इत्यस्य त्रिष्टुप्, (५०) 'आपो हि ष्ठाः' (५१) 'यो वः' (५२) 'तस्मा अरम्' इत्येषां गायत्री, (५३) 'मित्रः सꣳसृज्य' इत्यस्योपरिष्टाद्बृहती, (५४) 'रुद्राः सꣳसृज्य' (५५) 'सꣳसृष्टाम्' (५६) 'सिनीवाली' (५७) 'उखाङ्कृणोतु' इत्येषामनुष्टुप्, (५९) 'कृत्वाय सा' इत्यस्योष्णिक्, (६२) 'मित्रस्य चर्षणीधृतः' इत्यस्य गायत्री, (६३) 'देवस्त्वा' (६४) 'उत्थाय बृहती' इत्यनयोर्बृहती, (६७) 'विश्वो देवस्य' इत्यस्यानुष्टुप्; (६८) 'मा सु भित्था' 'अग्निश्चेदम्' इत्यनयोर्गायत्री, (६९) 'दृꣳहस्व देवि' इत्यस्य त्रिष्टुप्, (७०) 'द्रुन्नः सर्पिः' (७१) 'परस्या अधि' इत्यनयोर्गायत्री, (७२) 'परमस्याः' (७३) 'यदग्ने कानि' (७४) 'यदत्त्युपजिह्विका' इत्येषामनुष्टुप्, (७५) 'अहरहः' (७६) 'नाभा पृथिव्याः' इत्यनयोस्त्रिष्टुप्, (७७) 'याः सेनाः' (७८) 'दꣳष्ट्राभ्याम्मलिम्लून्' (७९) 'यो जनेषु' (८०) 'यो अस्मभ्यम्' (८१) 'सꣳशितम्मे' (८२) 'उदेषाम्बाहू' इत्येषामनुष्टुप्, (८३) 'अन्नपतेन्नस्य' इत्यस्योपरिष्टाद्बृहती ॥



॥ हरिः ओ३म् ॥

॥१॥ युञ्जानः प्रथमम्मनस्तत्त्वाय सविता धियम् । अग्नेर्ज्योतिर्निचाय्य पृथिव्याऽ
अध्याभरत् ॥१॥
युक्तेन मनसा वयन्देवस्य सवितुः सवे । स्वर्ग्याय शक्त्या ॥२॥
युक्त्वाय सविता देवान्त्स्वर्यतो धिया दिवम् । बृहज्ज्योतिः करिष्यतः सविता
प्रसुवाति तान् ॥३॥
युञ्जते मनऽउत युञ्जते धियो विप्रा विप्रस्य बृहतो विपश्चितः । वि होत्रा दधे
वयुनाविदेकऽइन्मही देवस्य सवितुः परिष्टुतिः ॥४॥
युजे वाम्ब्रह्म पूर्व्यन्नमोभिर्वि श्लोकऽएतु पथ्येव सूरेः । शृण्वन्तु विश्वेऽअमृतस्य
पुत्राऽआ ये धामानि दिव्यानि तस्थुः ॥५॥
यस्य प्रयाणमन्वन्यऽइद्ययुर्देवा देवस्य महिमानमोजसा । यः पार्थिवानि विममे
सऽएतशो रजाꣳसि देवः सविता महित्वना ॥६॥
देव सवितः प्रसुव यज्ञम्प्रसुव यज्ञपतिम्भगाय । दिव्यो गन्धर्वः केतपूः केतन्नः
पुनातु वाचस्पतिर्वाचन्नः स्वदतु ॥७॥
इमन्नो देव सवितर्यज्ञम्प्रणय देवाव्यꣳ सखिविदꣳ सत्राजितन्धनजितꣳ स्वर्जितम् ।
ऋचा स्तोमꣳ समर्द्धय गायत्रेण रथन्तरम्बृहद्गायत्रवर्त्तनि स्वाहा ॥८॥
देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्याम्पूष्णो हस्ताभ्याम् । आददे गायत्रेण
च्छन्दसाङ्गिरस्वत्पृथिव्याः सधस्थादग्निम्पुरीष्यमङ्गिरस्वदाभर त्रैष्टुभेन च्छन्द-
साङ्गिरस्वत् ॥९॥
अभ्रिरसि नार्यसि त्वया वयमग्निꣳ शकेम खनितुꣳ सधस्थऽआ । जागतेन
च्छन्दसाङ्गिरस्वत् ॥१०॥
हस्तऽआधाय सविता बिभ्रदभ्रिꣳ हिरण्ययीम् । अग्नेर्ज्योतिर्निचाय्य पृथिव्या
ऽअध्याभरदानुष्टुभेन च्छन्दसाङ्गिरस्वत् ॥११॥

॥२॥ प्रतूर्त्तँवाजिन्नाद्रव वरिष्ठामनु सँवतम्। दिवि ते जन्म परममन्तरिक्षे तव नाभिः पृथिव्यामधि योनिरित् ॥१२॥

युञ्जाथाꣳ रासभँयुवमस्मिन्यामे वृषण्वसू।
अग्निम्भरन्तमस्मयुम् ॥१३॥

योगेयोगे तव स्तरँवाजेवाजे हवामहे। सखायऽइन्द्रमूतये ॥१४॥

प्रतूर्वन्नेह्यवक्रामन्नशस्ती रुद्रस्य गाणपत्यम्मयोभूरेहि। उर्व्वन्तरिक्षँवीहि स्वस्तिगव्यूतिरभयानि कृण्वन्पूष्णा सयुजा सह ॥१५॥

पृथिव्याः सधस्थादग्निम्पुरीष्यमङ्गिरस्वदाभराग्निम्पुरीष्यमङ्गिरस्वदच्छेमोग्निम्पुरीष्यमङ्गिरस्वद्भरिष्यामः ॥१६॥

अन्वग्निरुषसामग्ग्रमक्ख्यदन्वहानि प्प्रथमो जातवेदाः।
अनु सूर्य्यस्य पुरुत्रा च रश्मीननु द्यावापृथिवीऽआततन्थ ॥१७॥

आगत्य वाज्यध्वानꣳ सर्व्वा मृधो विधूनुते।
अग्निꣳ सधस्थे महति चक्षुषा निचिकीषते ॥१८॥

आक्रम्य वाजिन्पृथिवीमग्निमिच्छ रुचा त्वम्।
भूम्या वृत्त्वाय नो ब्रूहि यतः खनेम तँवयम् ॥१९॥

द्यौस्ते पृष्ठम्पृथिवी सधस्थमात्मान्तरिक्षꣳ समुद्रो योनिः।
विख्याय चक्षुषा त्वमभितिष्ठ पृतन्यतः ॥२०॥

उत्क्राम महते सौभगायास्मादास्थानाद्द्रविणोदा वाजिन्।
वयꣳ स्याम सुमतौ पृथिव्याऽअग्निङ्खनन्तऽउपस्थेऽअस्याः ॥२१॥

उदक्रमीद्द्रविणोदा वाज्यर्वाकः सुलोकꣳ सुकृतम्पृथिव्याम्।
ततः खनेम सुप्प्रतीकमग्निꣳ स्वो रुहाणाऽअधि नाकमुत्तमम् ॥२२॥

आ त्वा जिघर्म्मि मनसा घृतेन प्प्रतिक्षियन्तम्भुवनानि विश्वा।
पृथुन्तिरश्चा वयसा बृहन्तँव्यचिष्ठमन्नै रभसन्दृशानम् ॥२३॥

आ विश्वतः प्प्रत्यञ्चञ्जिघर्म्यरक्षसा मनसा तज्जुषेत।
मर्य्यश्री स्पृहयद्वर्णोऽअग्निर्नाभिमृशे तन्वा जर्भुराणः ॥२४॥

परि वाजपतिः कविरग्निर्हव्यान्यक्रमीत्। दधद्रत्नानि दाशुषे ॥२५॥

परि त्वाग्ने पुरँवयँविप्प्रꣳ सहस्य धीमहि।
धृषद्वर्णन्दिवेदिवे हन्तारम्भङ्गुरावताम् ॥२६॥

त्वमग्ने द्युभिस्त्वमाशुशुक्षणिस्त्वमद्भ्यस्त्वमश्मनस्प्परि।
त्वँवनेभ्यस्त्वमोषधीभ्यस्त्वन्नृणान्नृपते जायसे शुचिः ॥२७॥

॥३॥ देवस्य त्वा सवितुः प्प्रसवेऽश्विनोर्ब्बाहुभ्याम्पूष्णो हस्ताभ्याम्। पृथिव्याः सधस्थादग्निम्पुरीष्यमङ्गिरस्वत्खनामि। ज्योतिष्मन्तन्त्वाग्ने सुप्प्रतीकमजस्रेण भानुना दीद्यतम्। शिवम्प्रजाभ्योहिꣳसन्तम्पृथिव्याः सधस्थादग्निम्पुरीष्यमङ्गिरस्वत्खनामः ॥२८॥

अपाम्पृष्ठमसि योनिरग्नेः समुद्रमभितः पिन्वमानम्।
वर्द्धमानो महाँ॥ऽआ च पुष्करे दिवो मात्रया वरिम्णा प्प्रथस्व ॥२९॥

शर्म्म च स्थो वर्म्म च स्थोऽच्छिद्रे बहुलेऽउभे।
व्यचस्वती सँवसाथाम्भृतमग्निम्पुरीष्यम् ॥३०॥

सँवसाथाꣳ स्वर्विदा समीचीऽउरसा त्मना।
अग्निमन्तर्भरिष्यन्ती ज्योतिष्मन्तमजस्रमित् ॥३१॥

पुरीष्योसि विश्वभराऽअथर्वा त्वा प्प्रथमो निरमन्थदग्ने।
त्वामग्ने पुष्करादध्यथर्वा निरमन्थत। मूर्द्ध्नो विश्वस्य वाघतः ॥३२॥

तमु त्वा दध्यङ्ङृषिः पुत्रऽईधेऽअथर्वणः। वृत्रहणम्पुरन्दरम् ॥३३॥

तमु त्वा पाथ्यो वृषा समीधे दस्युहन्तमम्। धनञ्जयꣳ रणेरणे ॥३४॥

सीद होतः स्वऽउ लोके चिकित्वान्त्सादया यज्ञꣳ सुकृतस्य योनौ।
देवावीर्देवान्हविषा यजास्यग्ने बृहद्यजमाने वयो धाः ॥३५॥

नि होता होतृषदने विदानस्त्वेषो दीदिवाँ॥ऽअसदत्सुदक्षः।
अदब्धव्रतप्रमतिर्वसिष्ठः सहस्रम्भरः शुचिजिह्वोऽअग्निः ॥३६॥

सꣳसीदस्व महाँ॥ऽअसि शोचस्व देववीतमः।
वि धूममग्नेऽअरुषम्मियेध्य सृज प्प्रशस्त दर्शतम् ॥३७॥

॥४॥ अपो देवीरुप सृज मधुमतीरयक्ष्माय प्प्रजाभ्यः।
तासामास्थानादुज्जिहतामोषधयः सुपिप्पलाः ॥३८॥

सन्ते वायुर्म्मातरिश्वा दधातूत्तानाया हृदयँयद्विकस्तम्।
यो देवानाञ्चरसि प्प्राणथेन कस्मै देव वषडस्तु तुभ्यम् ॥३९॥

सुजातो ज्योतिषा सह शर्म्म वरूथमासदत्स्वः।
वासोऽअग्ने विश्वरूपꣳ सँव्ययस्व विभावसो ॥४०॥

उदु तिष्ठ स्वध्वरावा नो देव्या धिया ।
दृशे च भासा बृहता सुशुक्वनिराग्ने याहि सुशस्तिभिः ॥४१॥
ऊर्ध्वऽऊ षु णऽऊतये तिष्ठा देवो न सविता ।
ऊर्ध्वो वाजस्य सनिता यदञ्जिभिर्वाघद्भिर्विह्वयामहे ॥४२॥
स जातो गर्भोऽअसि रोदस्योरग्ने चारुर्विभृतऽओषधीषु ।
चित्रः शिशुः परि तमांसि अक्तून्प्रमातृभ्योऽअधि कनिक्रदद्गाः ॥४३॥
स्थिरो भव वीड्वङ्गऽआशुर्भव वाज्यर्वन् ।
पृथुर्भव सुषदस्त्वमग्नेः पुरीषवाहणः ॥४४॥
शिवो भव प्रजाभ्यो मानुषीभ्यस्त्वमङ्गिरः ।
मा द्यावापृथिवीऽअभिशोचीर्मान्तरिक्षम्मा वनस्पतीन् ॥४५॥
प्रैतु वाजी कनिक्रदन्नानदद्रासभः पत्वा । भरन्नग्निम्पुरीष्यम्मा पाद्यायुषः पुरा ।
वृषाग्निं वृषणम्भरन्नपाङ्गर्भꣳ समुद्रियम् । अग्नऽआयाहि वीतये ॥४६॥
ऋतꣳ सत्यमृतꣳ सत्यमग्निम्पुरीष्यमङ्गिरस्वद्भरामः । ओषधयः प्रतिमोदध्वम-
ग्निमेतꣳ शिवमायन्तमभ्यत्र युष्माः । व्यस्यन्विश्वाऽअनिराऽअमीवा निषीदन्नो
ऽअप दुर्मतिञ्जहि ॥४७॥
ओषधयः प्रतिगृभ्णीत पुष्पवतीः सुपिप्पलाः ।
अयं वो गर्भऽऋत्वियः प्रत्नꣳ सधस्थमासदत् ॥४८॥
वि पाजसा पृथुना शोशुचानो बाधस्व द्विषो रक्षसोऽअमीवाः ।
सुशर्मणो बृहतः शर्मणि स्यामग्नेरहꣳ सुहवस्य प्रणीतौ ॥४९॥

॥५॥ आपो हि ष्ठा मयोभुवस्ता नऽऊर्जे दधातन । महे रणाय चक्षसे ॥५०॥
यो वः शिवतमो रसस्तस्य भाजयतेह नः । उशतीरिव मातरः ॥५१॥
तस्माऽअरङ्गमाम वो यस्य क्षयाय जिन्वथ । आपो जनयथा च नः ॥५२॥
मित्रः सꣳसृज्य पृथिवीम्भूमिञ्च ज्योतिषा सह ।
सुजातञ्जातवेदसमयक्ष्माय त्वा सꣳसृजामि प्रजाभ्यः ॥५३॥
रुद्राः सꣳसृज्य पृथिवीम्बृहज्ज्योतिः समीधिरे ।
तेषाम्भानुरजस्रऽइच्छुक्रो देवेषु रोचते ॥५४॥
सꣳसृष्टां वसुभी रुद्रैर्धीरैः कर्मण्याम्मृदम् ।
हस्ताभ्याम्मृद्वीङ्कृत्वा सिनीवाली कृणोतु ताम् ॥५५॥
सिनीवाली सुकपर्दा सुकुरीरा स्वौपशा ।
सा तुभ्यमदिते मह्योखान्दधातु हस्तयोः ॥५६॥
उखाङ्कृणोतु शक्त्या बाहुभ्यामदितिर्धिया ।
माता पुत्रं यथोपस्थे साग्निम्बिभर्तु गर्भऽआ । मखस्य शिरोऽसि ॥५७॥
वसवस्त्वा कृण्वन्तु गायत्रेण छन्दसाङ्गिरस्वद्ध्रुवासि पृथिव्यसि धारया मयि प्रजाꣳ
रायस्पोषङ्गौपत्यꣳ सुवीर्यꣳ सजातान्यजमानाय रुद्रास्त्वा कृण्वन्तु त्रैष्टुभेन
छन्दसाङ्गिरस्वद्ध्रुवास्यन्तरिक्षमसि धारया मयि प्रजाꣳ रायस्पोषङ्गौपत्यꣳ
सुवीर्यꣳ सजातान्यजमानायादित्यास्त्वा कृण्वन्तु जागतेन छन्दसाङ्गिरस्वद्ध्रुवासि
द्यौरसि धारया मयि प्रजाꣳ रायस्पोषङ्गौपत्यꣳ सुवीर्यꣳ सजातान्यजमानाय
विश्वे त्वा देवा वैश्वानराः कृण्वन्त्वानुष्टुभेन छन्दसाङ्गिरस्वद्ध्रुवासि दिशोऽसि
धारया मयि प्रजाꣳ रायस्पोषङ्गौपत्यꣳ सुवीर्यꣳ सजातान्यजमानाय ॥५८॥
अदित्यै रास्नास्यदितिष्टे बिलङ्गृभ्णातु । कृत्वाय सा महीमुखाम्मृन्मयीं योनि-
मग्नये । पुत्रेभ्यः प्रायच्छददितिः श्रपयानिति ॥५९॥
वसवस्त्वा धूपयन्तु गायत्रेण छन्दसाङ्गिरस्वद्रुद्रास्त्वा धूपयन्तु त्रैष्टुभेन छन्द-
साङ्गिरस्वदादित्यास्त्वा धूपयन्तु जागतेन छन्दसाङ्गिरस्वद्विश्वे त्वा देवा
वैश्वानरा धूपयन्त्वानुष्टुभेन छन्दसाङ्गिरस्वदिन्द्रस्त्वा धूपयतु वरुणस्त्वा धूपयतु
विष्णुस्त्वा धूपयतु ॥६०॥

॥६॥ अदितिष्ट्वा देवी विश्वदेव्यावती पृथिव्याः सधस्थेऽअङ्गिरस्वत्खनत्ववट देवानान्त्वा
पत्नीर्देवीर्विश्वदेव्यावतीः पृथिव्याः सधस्थेऽअङ्गिरस्वद्दधतूखे धिषणास्त्वा
देवीर्विश्वदेव्यावतीः पृथिव्याः सधस्थेऽअङ्गिरस्वदभीन्धतामुखे वरूत्रीष्ट्वा देवी-
र्विश्वदेव्यावतीः पृथिव्याः सधस्थेऽअङ्गिरस्वच्छ्रपयन्तूखे ग्नास्त्वा देवीर्विश्वदे-
व्यावतीः पृथिव्याः सधस्थेऽअङ्गिरस्वत्पचन्तूखे जनयस्त्वाच्छिन्नपत्रा देवीर्विश्व-
देव्यावतीः पृथिव्याः सधस्थेऽअङ्गिरस्वत्पचन्तूखे ॥६१॥
मित्रस्य चर्षणीधृतोवो देवस्य सानसि । द्युम्नञ्चित्रश्रवस्तमम् ॥६२॥
देवस्त्वा सवितोद्वपतु सुपाणिः स्वङ्गुरिः सुबाहुरुत शक्त्या ।
अव्यथमाना पृथिव्यामाशा दिशऽआपृण ॥६३॥
उत्थाय बृहती भवोदु तिष्ठ ध्रुवा त्वम् ।
मित्रैतान्तऽउखाम्परिददाम्यभित्त्याऽएषा मा भेदि ॥६४॥

वसवस्त्वाच्छृन्दन्तु गायत्रेण च्छन्दसाङ्गिरस्वद्रुद्रास्त्वाच्छृन्दन्तु त्रैष्टुभेन च्छन्दसा-
ङ्गिरस्वदादित्यास्त्वाच्छृन्दन्तु जागतेन च्छन्दसाङ्गिरस्वद्विश्श्वे त्वा देवा वैश्वानराऽ
आच्छृन्दन्त्वानुष्टुभेन च्छन्दसाङ्गिरस्वत् ॥६५॥

॥७॥ आकूतिमग्निम्प्रयुजꣳ स्वाहा मनो मेधामग्निम्प्रयुजꣳ स्वाहा चित्तँविज्ञातम-
ग्निम्प्रयुजꣳ स्वाहा वाचो विधृतिमग्निम्प्रयुजꣳ स्वाहा प्प्रजापतये मनवे स्वाहाग्नये
वैश्श्वानराय स्वाहा ॥६६॥
विश्श्वो देवस्य नेतुर्म्मर्त्तो वुरीत सख्यम् ।
विश्श्वो रायऽइषुद्ध्यति द्युम्नँवृणीत पुष्यसे स्वाहा ॥६७॥
मा सु भित्त्था मा सु रिषोम्ब धृष्णु वीरयस्व सु ।
अग्निश्चेदङ्करिष्ष्यथः ॥६८॥
दृꣳहस्व देवि पृथिवि स्वस्तयऽआसुरी माया स्वधया कृतासि । जुष्टन्देवेब्भ्यऽइदम-
स्तु हव्यमरिष्टा त्वमुदिहि यज्ञेऽअस्मिन् ॥६९॥
द्र्वन्नः सर्प्पिरासुतिः प्प्रत्नो होता वरेण्यः । सहसस्पुत्रोऽअद्भुतः ॥७०॥
परस्याऽअधि सँवतोवराँ२॥ऽअभ्यातर । यत्राहमस्म्मि ताँ२॥ऽअव ॥७१॥
परमस्याः परावतो रोहिदश्श्वऽइहागहि ।
पुरीष्ष्यः पुरुप्प्रियोग्ने त्वन्तरा मृधः ॥७२॥
यदग्ने कानि कानि चिदा ते दारूणि दद्ध्मसि ।
सर्व्वन्तदस्तु ते घृतन्तज्जुषस्व यविष्ठ्य ॥७३॥
यदत्त्युपजिह्विका यद्वम्म्रोऽअतिसर्प्पति ।
सर्व्वन्तदस्तु ते घृतन्तज्जुषस्व यविष्ठ्य ॥७४॥
अहरहरप्प्रयावम्भरन्तोश्श्वायेव तिष्ठते घासमस्म्मै ।
रायस्प्पोषेण समिषा मदन्तोग्ने मा ते प्प्रतिवेशा रिषाम ॥७५॥
नाभा पृथिव्याः समिधानेऽअग्नौ रायस्प्पोषाय बृहते हवामहे ।
इरम्मदम्बृहदुक्क्थँय्यजत्रञ्जेतारमग्निम्पृतनासु सासहिम् ॥७६॥
याः सेनाऽअभीत्वरीराव्याधिनीरुगणाऽउत ।
ये स्तेना ये च तस्कारास्ताँस्तेऽअग्नेपिदधाम्म्यास्ये ॥७७॥
दꣳष्ट्राब्भ्याम्मलिम्म्लूञ्जम्भ्यैस्तस्कराँ२॥ऽउत ।
हनुब्भ्याꣳ स्तेनान्भगवस्ताँस्त्वङ्खाद सुखादितान् ॥७८॥
ये जनेषु मलिम्म्लव स्तेनासस्तस्करा वने ।
ये कक्षेष्वघायवस्ताँस्ते दधामि जम्भयोः ॥७९॥
योऽअस्म्मब्भ्यमरातीयाद्यश्च नो द्वेषते जनः ।
निन्दाद्योऽअस्म्मान्धिप्प्साच्च सर्व्वन्तम्मस्म्मसा कुरु ॥८०॥
सꣳशितम्मे ब्रह्म सꣳशितँवीर्य्यम्बलम् ।
सꣳशितङ्क्षत्रञ्जिष्णु यस्याहमस्म्मि पुरोहितः ॥८१॥
उदेषाम्बाहूऽअतिरमुद्वर्चोऽअथो बलम् ।
क्षिणोमि ब्रह्मणामित्रानुन्नयामि स्वाँ२॥ऽअहम् ॥८२॥
अन्नपतेन्नस्य नो देह्यनमीवस्य शुष्मिणः ।
प्प्रप्प्र दातारन्तारिषऽऊर्ज्जन्नो धेहि द्विपदे चतुष्प्पदे ॥८३॥

॥ इत्येकादशोऽध्यायः ॥

---

# अथ द्वादशोऽध्यायः

**ऋषिः** (१) 'दृशानो रुक्मः' इत्यारभ्य (११७) 'अग्निः प्रियेषु' इत्यन्तानां सामान्यतः प्रजापतिः साध्या वा ऋषयः। विशेषतश्च—

(१) 'दृशानो रुक्मः' इत्यस्य वत्सप्रीः, (२) 'नक्तोषासा' इत्यस्य कुत्सः, (३) 'विश्वा रूपाणि' इत्यस्य श्यावाश्वः, (६) 'अक्रन्ददग्निः' इत्यस्य वत्सप्रीः, (११) 'आ त्वा' इत्यस्य ध्रुवः, (१२) 'उदुत्तमम्' इत्यस्य शुनःशेपः, (१३) 'अग्ने बृहत्' इत्यस्य त्रितः, (१४) 'हꣳसः शुचिषद्' इत्यस्य वामदेवः, (१८) 'दिवस्परि' इत्यारभ्य (२९) 'अस्ताव्यग्निः' इत्यन्तानां भालन्दनो वत्सप्रीः, (३०) 'समिधाग्निम्' इत्यस्याङ्गिरसो विरूपाक्षः, (३१) 'उदु त्वा' इत्यस्य तापसः, (३३) 'अक्रन्ददग्निः' इत्यस्य वत्सप्रीः, (३४) 'प्रप्रायमग्निः' इत्यस्य वसिष्ठः, (३६) 'अप्स्वग्ने' इत्यस्य विरूपः, (४२) 'बोधा मे' इत्यस्य दीर्घतमाः, (४३) 'स बोधि' 'विश्वकर्मणे' इत्यनयोः सोमाहुतिः, (४७) 'अयꣳ सो अग्निः' इत्यारभ्य (५१) 'इडामग्ने' इत्यन्तानां विश्वामित्रः, (५२) 'अयन्ते' इत्यस्य भारतौ देवश्रवोदेववातौ, (५५) 'ता अस्य' इत्यस्यैन्द्रः प्रियमेधः, (५६) 'इन्द्रं विश्वा' इत्यस्य माधुच्छन्दसो जेता, (६६) 'निवेशनः सङ्गमनः' इत्यस्य देवगन्धर्वो विश्वावसुः, (६७) 'सीरा युञ्जन्ति' (६८) 'युनक्त सीराः' इत्यनयोः सौम्यो बुधः, (६९) 'शुनꣳ सुफालाः' इत्यारभ्य (७२) 'कामङ्कामदुघे' इत्यन्तानां कुमारहारितः, (७५) 'या ओषधीः' इत्यारभ्य (८९) 'याः फलिनीः' इत्यन्तानामाथर्वणो भिषक्, (९०) 'मुञ्चन्तु मा' इत्यारभ्य (१०१) 'त्वमुत्तमासि' इत्यन्तानामाथर्वणो भिषग्बन्धुश्च, (१०२) 'मा मा हिꣳसीत्' इत्यस्य हिरण्यगर्भः, (१०६) 'अग्ने तव' इत्यारभ्य (१११) 'ऋतावानम्महिषम्' इत्यन्तानां पावकोऽग्निः, (११२) 'आप्यायस्व समेतु' (११३) 'सन्ते पयांसि' (११४) 'आप्यायस्व मदिन्तम' इत्येषां गोतमः, (११५) 'आ ते वत्सः' इत्यस्यावत्सारः, (११६) 'तुभ्यन्ताः' (११७) 'अग्निः प्रियेषु' इत्यनयोर्विरूपः ॥

**देवता** (१) 'दृशानो रुक्मः' इत्यस्य रुक्मः ।
(२) 'नक्तोषासा समनसा' इत्यस्याग्निः ।
(३) 'विश्वा रूपाणि' इत्यस्य सविता ।

(४) 'सुपर्णोसि' इत्यस्य गरुत्मान् ।

(५) 'विष्णोः० सपत्नहा' 'विष्णोः० अभिमातिहा' 'विष्णोः० अरातीयतः' 'विष्णोः० शत्रूयतः' 'दिशोनु विक्रमस्व' इत्येषां लिङ्गोक्ता ।

(६) 'अक्रन्ददग्निः' (७) 'अग्नेभ्यावर्तिन्' (८) 'अग्ने अङ्गिरः' (९) 'पुनरूर्जा' (१०) 'सह रय्या' (११) 'आ त्वाहार्षम्' इत्येषामग्निः ।

(१२) 'उदुत्तमम्' इत्यस्य वरुणः ।

(१३) 'अग्ने बृहत्' इत्यस्याग्निः ।

(१४) 'हꣳसः शुचिषद्' इत्यस्य सूर्यः ।

(१५) 'सीद त्वम्' (१६) 'अन्तरग्ने' (१७) 'शिवो भूत्वा' (१८) 'दिवस्परि' (१९) 'विद्मा ते' (२०) 'समुद्रे त्वा' (२१) 'अक्रन्ददग्निः' (२२) 'श्रीणामुदारः' (२३) 'विश्वस्य केतुः' (२४) 'उशिक्पावकः' (२५) 'दृशानो रुक्मः' (२६) 'यस्ते अद्य' (२७) 'आ तम्भज' (२८) 'त्वामग्ने' (२९) 'अस्ताव्यग्निः' (३०) 'समिधाग्निम्' (३१) 'उदु त्वा' (३२) 'प्रेदग्ने' (३३) 'अक्रन्ददग्निः' (३४) 'प्रप्रायमग्निः' इत्येषामग्निः ।

(३५) 'आपो देवीः' इत्यस्यापः ।

(३६) 'अप्स्वग्ने' (३७) 'गर्भो असि' (३८) 'प्रसद्य भस्मना' (३९) 'पुनरासद्य' (४०) 'पुनरूर्जा' (४१) 'सह रय्या' (४२) 'बोधा मे' (४३) 'स बोधि' इत्येषामग्निः, 'विश्वकर्मणे स्वाहा' इत्यस्य विश्वकर्मा ।

(४४) 'पुनस्त्वादित्याः' इत्यस्याग्निः ।

(४५) 'अपेत वीत' इत्यस्य लिङ्गोक्ता ।

(४६) 'सञ्ज्ञानमसि' इत्यस्य ऊषः, 'अग्नेर्भस्म' इत्यस्य सिकता, 'चित स्थ' इत्यस्य परिश्रितः ।

(४७) 'अयꣳ सः' (४८) 'अग्ने यत्ते' (४९) 'अग्ने दिवः' (५०) 'पुरीष्यासो अग्नयः' (५१) 'इडामग्ने' (५२) 'अयन्ते' इत्येषामग्निः ।

(५३) 'चिदसि तया' 'परिचिदसि तया' इत्यनयोरिष्टिका ।

(५४) 'लोकम्पृण' इत्यस्य लिङ्गोक्ता ।

(५५) 'ता अस्य' इत्यस्यापः ।

(५६) 'इन्द्रं विश्वा' इत्यस्येन्द्रः ।

(५७) 'समितꣳ सङ्कल्पेथाम्' (५८) 'सं वाम्' (५९) 'अग्ने त्वम्' (६०) 'भवतन्नः' इत्येषां द्वावग्नी ।

(६१) 'मातेव पुत्रम्' इत्यस्य उखा ।

(६२) 'असुन्वन्तम्' (६३) 'नमः सु ते' (६४) 'यस्यास्ते' इत्येषां निर्ऋतिः ।

(६५) 'यन्ते देवी' इत्यस्य यजमानः, 'नमो भूत्यै' इत्यस्य भूतिः ।

(६६) 'निवेशनः सङ्गमनः' इत्यस्येन्द्रः ।

(६७) 'सीरा युञ्जन्ति' (६८) 'युनक्त सीराः' इत्यनयोः सीरः ।

(६९) 'शुनꣳ सु फालाः' (७०) 'घृतेन सीता' (७१) 'लाङ्गलम्पवीरवत्' (७२) 'कामङ्कामदुघे' इत्येषां सीता ।

(७३) 'विमुच्यध्वमघ्न्याः' इत्यस्य अनड्वान् ।

(७४) 'सजूरब्दः' इत्यस्य लिङ्गोक्ता ।

(७५) 'या ओषधीः' (७६) 'शतं वः' (७७) 'ओषधीः प्रतिमोदध्वम्' (७८) 'ओषधीरिति' (७९) 'अश्वत्थे वः' (८०) 'यत्रौषधीः' (८१) 'अश्वावतीम्' (८२) 'उच्छुष्मा ओषधीनाम्' (८३) 'इष्कृतिर्नाम' (८४) 'अति विश्वाः' (८५) 'यदिमाः' (८६) 'यस्यौषधीः' (८७) 'साकं यक्ष्म' (८८) 'अन्या वः' (८९) 'याः फलिनीः' (९०) 'मुञ्चन्तु मा' (९१) 'अवपतन्तीः' (९२) 'या ओषधीः० बह्वीः' (९३) 'या ओषधीः० विष्ठिताः' (९४) 'याश्चेदम्' (९५) 'मा वो रिषत्' (९६) 'ओषधयः समवदन्त' (९७) 'नाशयित्री बलासस्य' (९८) 'त्वाङ्गन्धर्वाः' (९९) 'सहस्व मे' (१००) 'दीर्घायुस्ते' (१०१) 'त्वमुत्तमासि' इत्येषामोषधिः ।

(१०२) 'मा मा हिꣳसीत्' इत्यस्य कः ।

(१०३) 'अभ्यावर्तस्व' (१०४) 'अग्ने यत्ते' इत्यनयोरग्निः ।

(१०५) 'इषमूर्जम्' इत्यस्याशीः ।

(१०६) 'अग्ने तव' (१०७) 'पावकवर्चाः' (१०८) 'ऊर्जोनपात्' (१०९) 'इरज्यन्नग्ने' (११०) 'इष्कर्तारमध्वरस्य' (१११) 'ऋतावानम्महिषम्' इत्येषामग्निः ।

(११२) 'आप्यायस्व समेतु' (११३) 'सन्ते पयांसि' (११४) 'आप्यायस्व मदिन्तम' इत्येषां सोमः ।

(११५) 'आ ते वत्सः' (११६) 'तुभ्यन्ताः' (११७) 'अग्निः प्रियेषु' इत्येषामग्निः ॥

छन्दः (१) 'दृशानो रुक्मः' (२) 'नक्तोषासा समनसा' इत्यनयोस्त्रिष्टुप्, (३) 'विश्वा रूपाणि' इत्यस्य जगती, (४) 'सुपर्णोसि' इत्यस्य कृतिः, (६) 'अक्रन्ददग्निः' इत्यस्य त्रिष्टुप्, (७) 'अग्नेभ्यावर्तिन्' इत्यस्योर्ध्वबृहती, (८) 'अग्ने अङ्गिरः' इत्यस्य महाबृहती, (९) 'पुनरूर्जा' (१०) 'सह रय्या' इत्यनयोर्गायत्री, (११) 'आ त्वाहार्षम्' इत्यस्यानुष्टुप्, (१२) 'उदुत्तमम्' (१३) 'अग्ने बृहत' इत्यनयोस्त्रिष्टुप्, (१४) 'हꣳसः शुचिषद्' इत्यस्य जगती, 'बृहत्' इति यजुः, (१५) 'सीद त्वम्' इत्यस्य त्रिष्टुप्, (१६) 'अन्तरग्ने' (१७) 'शिवो भूत्वा' इत्यनयोरनुष्टुप्, (१८) 'दिवस्परि' इत्यारभ्य (२९) 'अस्ताव्यग्निः' इत्यन्तानां त्रिष्टुप्, (३०) 'समिधाग्निम्' इत्यस्य गायत्री, (३१) 'उदु त्वा' (३२) 'प्रेदग्ने' इत्यनयोरनुष्टुप्, (३३) 'अक्रन्ददग्निः' (३४) 'प्रप्रायमग्निः' (३५) 'आपो देवीः' इत्येषां त्रिष्टुप्, (३६) 'अप्स्वग्ने' इत्यस्य गायत्री, (३७) 'गर्भो असि' (३८) 'प्रसद्य भस्मना' (३९) 'पुनरासद्य' इत्येषामनुष्टुप्, (४०) 'पुनरूर्जा' (४१) 'सह रय्या' इत्यनयोर्गायत्री, (४२) 'बोधा मे' इत्यस्य त्रिष्टुप्, (४३) 'स बोधि' इत्यस्य गायत्री, 'विश्वकर्मणे स्वाहा' इति यजुः, (४४) 'पुनस्त्वा-दित्याः' (४५) 'अपेत वीत' (४७) 'अयꣳ सो अग्निः' (४८) 'अग्ने यत्ते' (४९) 'अग्ने दिवः' इत्येषां त्रिष्टुप्, (५०) 'पुरीष्यासो अग्नयः' इत्यस्यानुष्टुप्, (५१) 'इडामग्ने' इत्यस्य त्रिष्टुप्, (५२) 'अयन्ते' (५४) 'लोकम्पृण' (५५) 'ता अस्य' (५६) 'इन्द्रं विश्वा' इत्येषामनुष्टुप्, (५७) 'समितꣳ सङ्कल्पेथाम्' इत्यस्योष्णिक्, (५८) 'सं वाम्' इत्यस्योपरिष्टाद्बृहती, (५९) 'अग्ने त्वम्' इत्यस्योष्णिक्, (६०) 'भवतन्नः' इत्यस्य पङ्क्तिः, (६१) 'मातेव पुत्रम्' इत्यारभ्य (६५) 'यन्ते' इत्यन्तानां त्रिष्टुप्, 'नमो भूत्यै' इत्यस्यैकपदा विराट्, (६६) 'निवेशनः सङ्गमनः' इत्यस्य त्रिष्टुप्, (६७) 'सीरा युञ्जन्ति' इत्यस्य गायत्री, (६८) 'युनक्त सीराः' (६९) 'शुनꣳ सु फालाः' (७०) 'घृतेन सीता' इत्येषां त्रिष्टुप्, (७१) 'लाङ्गलम्पवीरवत्' इत्यस्य पङ्क्तिः, (७२) 'कामङ्कामदुघे' इत्यस्यानुष्टुप्, (७३) 'विमुच्यध्वम्' इत्यस्य गायत्री, (७५) 'या ओषधीः' इत्यारभ्य (१०१) 'त्वमुत्तमासि' इत्यन्तानामनुष्टुप्, (१०२) 'मा मा हिꣳसीत्' इत्यस्य त्रिष्टुप्, 'अभ्यावर्तस्व' इत्यस्योष्णिक्, (१०४) 'अग्ने यत्ते' इत्यस्य गायत्री, (१०५) 'इषमूर्जम्' इत्यस्य त्रिष्टुप्, (१०६) 'अग्ने तव' (१०७) 'पावकवर्चाः' इत्यनयो-र्विष्टारपङ्क्तिः, (१०८) 'ऊर्जोनपात्' (१०९) 'इरज्यन्नग्ने' (११०) 'इष्कर्तारम्' इत्येषां सतोबृहती, (१११) 'ऋतावानम्महिषम्' इत्यस्योपरिष्टाज्ज्योतिः, (११२) 'आप्यायस्व समेतु' इत्यस्य गायत्री, (११३) 'सन्ते पयांसि' इत्यस्य त्रिष्टुप्, (११४) 'आप्यायस्व मदिन्तम' इत्यस्योष्णिक्, (११५) 'आ ते वत्सः' (११६) 'तुभ्यन्ताः' (११७) 'अग्निः प्रियेषु' इत्येषां गायत्री ॥

॥ हरिःॐ ॥

॥१॥ दृशानो रुक्मऽउर्व्या व्यद्यौद्दुर्म्मर्षमायुः श्रिये रुचानः ।
अग्निरमृतोऽअभवद्वयोभिर्य्यदेनन्द्यौरजनयत्सुरेताः ॥१॥
नक्तोषासा समनसा विरूपे धापयेते शिशुमेकꣳ समीची ।
द्यावाक्षामा रुक्मोऽअन्तर्विभाति देवाऽअग्निन्धारयन्द्रविणोदाः ॥२॥
विश्वा रूपाणि प्रतिमुञ्चते कविः प्रासावीद्भद्रन्द्विपदे चतुष्प्पदे ।
वि नाकमख्यत्सविता वरेण्योनु प्रयाणमुषसो विराजति ॥३॥

सुपर्णोसि गरुत्माँस्त्रिवृत्ते शिरो गायत्रञ्चक्षुर्बृहद्रथन्तरे पक्षौ । स्तोमऽआत्मा
च्छन्दाᳬसि यजूᳬषि नाम । साम ते तनूर्वामदेव्यँय्यज्ञायज्ञियम्पुच्छ-
न्धिष्ण्याः शफाः । सुपर्णोसि गरुत्मान्दिवङ्गच्छ स्वः पत ॥४॥
विष्णोः क्रमोसि सपत्नहा गायत्रञ्छन्दऽआरोह पृथिवीमनु विक्रमस्व विष्णोः
क्रमोस्यभिमातिहा त्रैष्टुभञ्छन्दऽआरोहान्तरिक्षमनु विक्रमस्व विष्णोः क्रमो-
स्यरातीयतो हन्ता जागतञ्छन्दऽआरोह दिवमनु विक्रमस्व विष्णोः क्रमोसि शत्रूयतो
हन्तानुष्टुभञ्छन्दऽआरोह दिशोनु विक्रमस्व ॥५॥
अक्रन्ददग्नि स्तनयन्निव द्यौः क्षामा रेरिहद्वीरुधः समञ्जन् ।
सद्यो जज्ञानो वि हीमिद्धोऽअख्यदा रोदसी भानुना भात्यन्तः ॥६॥
अग्नेऽभ्यावर्त्तिन्नभि मा निवर्त्तस्वायुषा वर्चसा प्रजया धनेन ।
सन्या मेधया रय्या पोषेण ॥७॥
अग्नेऽअङ्गिरः शतन्ते सन्त्वावृतः सहस्रन्तऽउपावृतः ।
अधा पोषस्य पोषेण पुनर्नो नष्टमाकृधि पुनर्नो रयिमाकृधि ॥८॥
पुनरूर्जा निवर्त्तस्व पुनरग्नऽइषायुषा । पुनर्नः पाह्यᳬहसः ॥९॥
सह रय्या निवर्त्तस्वाग्ने पिन्वस्व धारया । विश्वप्स्न्या विश्वतस्परि ॥१०॥
आ त्वाहार्षमन्तरभूर्ध्रुवस्तिष्ठाविचाचलिः ।
विशस्त्वा सर्वा वाञ्छन्तु मा त्वद्राष्ट्रमधिभ्रशत् ॥११॥
उदुत्तमँवरुण पाशमस्मदवाधमँवि मध्यमᳬ श्रथाय ।
अथा वयमादित्य व्रते तवानागसोऽअदितये स्याम ॥१२॥
अग्रे बृहन्नुषसामूर्ध्वोऽअस्थान्निर्जगन्वान्तमसो ज्योतिषागात् ।
अग्निर्भानुना रुशता स्वङ्गऽआ जातो विश्वा सद्मान्यप्राः ॥१३॥
हᳬसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् ।
नृषद्वरसदृतसद्व्योमसदब्जा गोजाऽऋतजाऽअद्रिजाऽऋतम्बृहत् ॥१४॥
सीद त्वम्मातुरस्याऽउपस्थे विश्वान्यग्ने वयुनानि विद्वान् ।
मैनान्तपसा मार्चिषाभिशोचीरन्तरस्याᳬ शुक्रज्योतिर्विभाहि ॥१५॥
अन्तरग्ने रुचा त्वमुखायाः सदने स्वे । तस्यास्त्वᳬ हरसा तपञ्जातवेदः शिवो भव ॥१६॥
शिवो भूत्वा मह्यमग्नेऽअथो सीद शिवस्त्वम् ।
शिवाः कृत्वा दिशः सर्वाः स्वाँय्योनिमिहासदः ॥१७॥

॥२॥ दिवस्परि प्रथमञ्जज्ञेऽअग्निरस्मद्द्वितीयम्परि जातवेदाः ।
तृतीयमप्सु नृमणाऽअजस्रमिन्धानऽएनञ्जरते स्वाधीः ॥१८॥
विद्मा तेऽअग्ने त्रेधा त्रयाणि विद्मा ते धाम विभृता पुरुत्रा ।
विद्मा ते नाम परमङ्गुहा यद्विद्मा तमुत्सँय्यतऽआजगन्थ ॥१९॥
समुद्रे त्वा नृमणाऽअप्स्वन्तर्नृचक्षाऽईधे दिवोऽअग्नऽऊधन् ।
तृतीये त्वा रजसि तस्थिवाᳬसमपामुपस्थे महिषाऽअवर्द्धन् ॥२०॥
अक्रन्ददग्नि स्तनयन्निव द्यौः क्षामा रेरिहद्वीरुधः समञ्जन् ।
सद्यो जज्ञानो वि हीमिद्धोऽअख्यदा रोदसी भानुना भात्यन्तः ॥२१॥
श्रीणामुदारो धरुणो रयीणाम्मनीषाणाम्प्रार्पणः सोमगोपाः ।
वसुः सूनुः सहसोऽअप्सु राजा विभात्यग्रऽउषसामिधानः ॥२२॥
विश्वस्य केतुर्भुवनस्य गर्भऽआ रोदसीऽअपृणाज्जायमानः ।
वीडुञ्चिदद्रिमभिनत्परायञ्जना यदग्निमयजन्त पञ्च ॥२३॥
उशिक्पावकोऽअरतिः सुमेधा मर्त्तेष्वग्निरमृतो निधायि ।
इयर्त्ति धूममरुषम्भरिभ्रदुच्छुक्रेण शोचिषा द्यामिनक्षन् ॥२४॥
दृशानो रुक्मऽउर्व्या व्यद्यौद्दुर्मर्षमायुः श्रिये रुचानः ।
अग्निरमृतोऽअभवद्वयोभिर्यदेनन्द्यौरजनयत्सुरेताः ॥२५॥
यस्तेऽअद्य कृणवद्भद्रशोचेपूपन्देव घृतवन्तमग्ने ।
प्र तन्नय प्रतरँवस्योऽअच्छाभि सुम्नन्देवभक्तँय्यविष्ठ ॥२६॥
आ तम्भज सौश्रवसेष्वग्नऽउक्थऽउक्थऽआभज शस्यमाने ।
प्रियः सूर्ये प्रियोऽअग्ना भवात्युज्जातेन भिनददुज्जनित्वैः ॥२७॥
त्वामग्ने यजमानाऽअनु द्यून्विश्वा वसु दधिरे वार्य्याणि ।
त्वया सह द्रविणमिच्छमाना व्रजङ्गोमन्तमुशिजो विवव्रुः ॥२८॥
अस्ताव्यग्निर्नराᳬ सुशेवो वैश्वानरऽऋषिभिः सोमगोपाः ।
अद्वेषे द्यावापृथिवी हुवेम देवा धत्त रयिमस्मे सुवीरम् ॥२९॥

॥३॥ समिधाग्निन्दुवस्यत घृतैर्बोधयतातिथिम् ।
आस्मिन्हव्या जुहोतन ॥३०॥
उदु त्वा विश्वे देवाऽअग्ने भरन्तु चित्तिभिः ।
स नो भव शिवस्त्वᳬ सुप्रतीको विभावसुः ॥३१॥

प्रेदग्ने ज्ज्योतिष्मान्याहि शिवेभिरर्च्चिभिष्ट्वम् ।
बृहद्भिर्भानुभिर्भासन्मा हिꣳसीस्तन्वा प्प्रजाः ॥३२॥
अक्क्रन्ददग्नि स्तनयन्निव द्यौः क्षामा रेरिहद्वीरुधः समञ्जन् ।
सद्यो जज्ज्ञानो वि हीमिद्धोऽअक्ख्यदा रोदसी भानुना भात्यन्तः ॥३३॥
प्रप्रायमग्निर्भरतस्य शृण्वे वि यत्सूर्य्यो न रोचते बृहद्भाः ।
अभि यः पूरुम्पृतनासु तस्थौ दीदाय दैव्योऽअतिथिः शिवो नः ॥३४॥
आपो देवीः प्प्रतिगृब्भ्णीत भस्म्मैतत्स्योने कृणुद्ध्वꣳ सुरभाऽउ लोके ।
तस्म्मै नमन्तां जनयः सुपत्नीर्म्मातेव पुत्रम्बिभृताप्स्वेनत् ॥३५॥
अप्स्वग्ने सधिष्ट्व सौषधीरनुरुद्ध्यसे । गर्ब्भे सञ्जायसे पुनः ॥३६॥
गर्ब्भोऽअस्योषधीनाङ्गर्ब्भो वनस्पतीनाम् ।
गर्ब्भो विश्श्वस्य भूतस्याग्ने गर्ब्भोऽअपामसि ॥३७॥
प्रसद्य भस्म्मना योनिमपश्च पृथिवीमग्ने ।
सꣳसृज्य मातृभिष्ट्वञ्ज्योतिष्म्मान्पुनरासदः ॥३८॥
पुनरासद्य सदनमपश्च पृथिवीमग्ने । शेषे मातुर्य्यथोपस्थेन्तरस्याꣳ शिवतमः ॥३९॥
पुनरूर्ज्जा निवर्त्तस्व पुनरग्नऽइषायुषा । पुनर्न्नः पाह्यꣳहसः ॥४०॥
सह रय्या निवर्त्तस्वाग्ने पिन्वस्व धारया । विश्श्वप्स्न्या विश्श्वतस्परि ॥४१॥
बोधा मेऽअस्य वचसो यविष्ठ मꣳहिष्ठस्य प्प्रभृतस्य स्वधावः ।
पीयति त्वोऽअनु त्वो गृणाति वन्दारुष्टे तन्वँवन्देऽअग्ने ॥४२॥
स बोधि सूरिर्म्मघवा वसुपते वसुदावन् ।
युयोद्ध्यस्म्मद्द्वेषाꣳसि विश्श्वकर्म्मणे स्वाहा ॥४३॥
पुनस्त्वादित्त्या रुद्रा वसवः समिन्धताम्पुनर्ब्रह्माणो वसुनीथ यज्ञैः ।
घृतेन त्वन्तन्वँवर्द्धयस्व सत्त्याः सन्तु यजमानस्य कामाः ॥४४॥

॥४॥ अपेत वीत वि च सर्प्पतातो येत्र स्थ पुराणा ये च नूतनाः ।
अदाद्यमोवसानम्पृथिव्याऽअक्रन्निमम्पितरो लोकमस्म्मै ॥४५॥
सञ्ज्ञानमसि कामधरणम्मयि ते कामधरणम्भूयात् ।
अग्नेर्भस्म्मास्यग्नेः पुरीषमसि चित स्थ परिचितऽऊर्द्ध्वचितः श्रयद्ध्वम् ॥४६॥
अयꣳ सोऽअग्निर्य्यस्म्मिन्त्सोममिन्द्रः सुतन्दधे जठरे वावशानः ।
सहस्रियँवाजमत्त्यन्न सप्तिꣳ ससवान्त्सन्त्स्तूयसे जातवेदः ॥४७॥
अग्ने यत्ते दिवि वर्च्चः पृथिव्याँय्यदोषधीष्वप्स्वा यजत्र ।
येनान्तरिक्षमुर्व्वाततन्थ त्वेषः स भानुरर्ण्णवो नृचक्क्षाः ॥४८॥
अग्ने दिवोऽअर्ण्णमच्छा जिगास्यच्छा देवाँ२॥ऽऊचिषे धिष्ण्ण्या ये ।
या रोचने परस्तात्सूर्य्यस्य याश्चावस्तादुपतिष्ठन्तऽआपः ॥४९॥
पुरीष्ष्यासोऽअग्नयः प्प्रावणेभिः सजोषसः ।
जुषन्ताँय्यज्ज्ञमद्द्रुहोनमीवाऽइषो महीः ॥५०॥
इडामग्ने पुरुदꣳसꣳ सनिङ्गोः शश्श्वत्तमꣳ हवमानाय साध ।
स्यान्नः सूनुस्तनयो विजावाग्ने सा ते सुमतिर्ब्भूत्त्वस्म्मे ॥५१॥
अयन्ते योनिर्ऋत्त्वियो यतो जातोऽअरोचथाः ।
तञ्जानन्नग्नऽआरोहाथा नो वर्द्धया रयिम् ॥५२॥
चिदसि तया देवतयाङ्गिरस्वद्ध्रुवा सीद परिचिदसि तया देवतयाङ्गिरस्वद्ध्रुवा
सीद ॥५३॥
लोकम्पृण च्छिद्द्रम्पृणाथो सीद ध्रुवा त्वम् ।
इन्द्राग्नी त्वा बृहस्प्पतिरस्म्मिन्योनावसीषदन् ॥५४॥
ताऽअस्य सूददोहसः सोमꣳ श्रीणन्ति पृश्श्नयः ।
जन्म्मन्देवानाँविशस्त्रिष्ष्वारोचने दिवः ॥५५॥
इन्द्रँविश्श्वाऽअवीवृधन्त्समुद्द्रव्यचसङ्गिरः ।
रथीतमꣳ रथीनाँवाजानाꣳ सत्त्पतिम्पतिम् ॥५६॥
समितꣳ सङ्क्कल्प्पेथाꣳ सम्प्रियौ रोचिष्ण्णू सुमनस्यमानौ ।
इषमूर्ज्जमभि सँवसानौ ॥५७॥
सँवाम्मनाꣳसि सँव्व्रता समु चित्तान्याकरम् ।
अग्ने पुरीष्ष्याधिपा भव त्वन्नऽइषमूर्ज्जँय्यजमानाय धेहि ॥५८॥
अग्ने त्वम्पुरीष्ष्यो रयिमान्पुष्टिमाँ२॥ऽअसि ।
शिवाः कृत्त्वा दिशः सर्व्वाः स्वँय्योनिमिहासदः ॥५९॥
भवतन्नः समनसौ सचेतसावरेपसौ ।
मा यज्ज्ञꣳ हिꣳसिष्टम्मा यज्ज्ञपतिञ्जातवेदसौ शिवौ भवतमद्य नः ॥६०॥
मातेव पुत्रम्पृथिवी पुरीष्ष्यमग्निꣳ स्वे योनावभारुखा ।
ताँविश्श्वैर्द्देवैर्ऋतुभिः सँविदानः प्प्रजापतिर्व्विश्श्वकर्म्मा विमुञ्चतु ॥६१॥

॥५॥ असुन्वन्तमयजमानमिच्छ स्तेनस्येत्त्यामन्विहि तस्करस्य ।
अन्यमस्म्मदिच्छ सा तऽइत्त्या नमो देवि निर्ऋते तुब्भ्यमस्तु ॥६२॥
नमः सु ते निर्ऋते तिग्ग्मतेजोयस्म्मयँविचृता बन्धमेतम् ।
यमेन त्वँय्यम्म्या सँविदानोत्तमे नाकेऽअधिरोहयैनम् ॥६३॥
यस्यास्ते घोरऽआसञ्जुहोम्म्येषाम्बन्धानामवसर्जनाय ।
यान्त्वा जनो भूमिरिति प्प्रमन्दते निर्ऋतिन्त्वाहम्परिवेद विश्श्वतः ॥६४॥
यन्ते देवी निर्ऋतिराबबन्ध पाशङ्ग्रीवास्वविचृत्त्यम् ।
तन्ते विष्ष्याम्म्यायुषो न मद्ध्यादथैतम्पितुमद्धि प्प्रसूतः । नमो भूत्त्यै येदञ्चकार ॥६५॥
निवेशनः सङ्गमनो वसूनाँविश्श्वा रूपाभिचष्ट्टे शचीभिः ।
देवऽइव सविता सत्त्यधर्म्मेन्द्रो न तस्त्थौ समरे पथीनाम् ॥६६॥
सीरा युञ्जन्ति कवयो युगा वितन्वते पृथक् । धीरा देवेषु सुम्नया ॥६७॥
युनक्त सीरा वि युगा तनुद्ध्वङ्कृते योनौ वपतेह बीजम् ।
गिरा च श्श्रुष्टिः सभराऽअसन्नो नेदीयऽइत्सृण्ण्यः पक्वमेयात् ॥६८॥
शुनँ सुफाला विकृषन्तु भूमिँ शुनङ्कीनाशाऽअभियन्तु वाहैः ।
शुनासीरा हविषा तोशमाना सुपिप्पलाऽओषधीः कर्त्तनास्म्मे ॥६९॥
घृतेन सीता मधुना समज्यताँविश्श्वैर्द्देवैरनुमता मरुद्भिः ।
ऊर्ज्जस्वती पयसा पिन्वमानास्म्मान्त्सीते पयसाब्भ्याववृत्स्व ॥७०॥
लाङ्गलम्पवीरवत्त्सुशेवँ सोमपित्त्सरु ।
तदुद्वपति गामविम्प्रफर्व्यञ्च पीवरीम्प्रस्त्थावद्रथवाहणम् ॥७१॥
कामङ्कामदुघे धुक्क्ष्व मित्राय वरुणाय च ।
इन्द्रायाश्श्विब्भ्याम्पूष्णे प्प्रजाब्भ्यऽओषधीब्भ्यः ॥७२॥
विमुच्च्यद्ध्वमग्घ्न्या देवयानाऽअगन्म तमसस्प्पारमस्य । ज्योतिरापाम ॥७३॥
सजूरब्दोऽअयवोभिः सजूरुषाऽअरुणीभिः । सजोषसावश्श्विना दँसोभिः सजूः
सूरऽएतशेन सजूर्वैश्श्वानरऽइडया घृतेन स्वाहा ॥७४॥

॥६॥ याऽओषधीः पूर्व्वा जाता देवेब्भ्यस्त्रियुगम्पुरा ।
मनै नु बब्भ्रूणामहँ शतन्धामानि सप्त च ॥७५॥
शतँवोऽअम्ब धामानि सहस्रमुत वो रुहः ।
अधा शतक्क्रत्वो यूयमिमम्मेऽअगदङ्कृत ॥७६॥

ओषधीः प्प्रतिमोदद्ध्वम्पुष्प्पवतीः प्प्रसूवरीः ।
अश्श्वाऽइव सजित्त्वरीर्व्वीरुधः पारयिष्ण्ण्वः ॥७७॥
ओषधीरिति मातरस्तद्वो देवीरुपब्ब्रुवे ।
सनेयमश्श्वङ्गाँवासऽआत्त्मानन्तव पूरुष ॥७८॥
अश्श्वत्त्थे वो निषदनम्पर्ण्णे वो वसतिष्कृता ।
गोभाजऽइत्किलासथ यत्सनवथ पूरुषम् ॥७९॥
यत्रौषधीः समग्ग्मत राजानः समिताविव ।
विप्प्रः सऽउच्च्यते भिषग्ग्रक्षोहामीवचातनः ॥८०॥
अश्श्वावतीँ सोमावतीमूर्ज्जयन्तीमुदोजसम् ।
आवित्सि सर्व्वाऽओषधीरस्म्माऽअरिष्टतातये ॥८१॥
उच्छुष्म्माऽओषधीनाङ्गावो गोष्ठादिवेरते ।
धनँ सनिष्ष्यन्तीनामात्त्मानन्तव पूरुष ॥८२॥
इष्कृतिर्न्नाम वो माताथो यूयँ स्थ निष्कृतीः ।
सीराः पतत्रिणी स्त्थन यदामयति निष्कृथ ॥८३॥
अति विश्श्वाः परिष्ट्ठा स्तेनऽइव व्व्रजमक्क्रमुः ।
ओषधीः प्प्राचुच्च्यवुर्य्यत्किञ्च तन्न्वो रपः ॥८४॥
यदिमा वाजयन्नहमोषधीर्हस्तऽआदधे ।
आत्त्मा यक्ष्मस्य नश्श्यति पुरा जीवगृभो यथा ॥८५॥
यस्यौषधीः प्प्रसर्प्पथाङ्गमङ्गम्परुष्प्परुः ।
ततो यक्ष्मँविबाधद्ध्वऽउग्ग्रो मद्ध्यमशीरिव ॥८६॥
साकँय्यक्ष्म प्प्रपत चाषेण किकिदीविना ।
साकँवातस्य ध्राज्या साकन्नश्श्य निहाकया ॥८७॥
अन्या वोऽअन्यामवत्त्वन्यान्यस्याऽउपावत ।
ताः सर्व्वाः सँविदानाऽइदम्मे प्प्रावता वचः ॥८८॥
याः फलिनीर्य्याऽअफलाऽअपुष्प्पा याश्श्च पुष्प्पिणीः ।
बृहस्प्पतिप्प्रसूतास्ता नो मुञ्चन्त्वँहसः ॥८९॥
मुञ्चन्तु मा शपत्थ्यादथो वरुण्ण्यादुत ।
अथो यमस्य पड्वीशात्सर्व्वस्म्माद्देवकिल्बिषात् ॥९०॥

अवपतन्तीरवदन्दिवऽओषधयस्परि ।
यञ्जीवमश्नवामहै न स रिष्याति पूरुषः ॥९१॥
याऽओषधीः सोमराज्ञीर्बह्वीः शतविचक्षणाः ।
तासामसि त्वमुत्तमारङ्कामाय शꣳ हृदे ॥९२॥
याऽओषधीः सोमराज्ञीर्विष्ठिताः पृथिवीमनु ।
बृहस्पतिप्प्रसूताऽअस्यै सन्दत्त वीर्य्यम् ॥९३॥
याश्चेदमुपशृण्वन्ति याश्च दूरम्परागताः ।
सर्वाः सङ्गत्य वीरुधोऽस्यै सन्दत्त वीर्य्यम् ॥९४॥
मा वो रिषत्खनिता यस्मै चाहङ्खनामि वः ।
द्विपाच्चतुष्प्पादस्म्माकꣳ सर्व्वमस्त्वनातुरम् ॥९५॥
ओषधयः समवदन्त सोमेन सह राज्ञा ।
यस्मै कृणोति ब्राह्मणस्तꣳ राजन्पारयामसि ॥९६॥
नाशयित्री बलासस्यार्शसऽउपचितामसि ।
अथो शतस्य यक्ष्माणाम्पाकारोरसि नाशनी ॥९७॥
त्वाङ्गन्धर्वाऽअखनँस्त्वामिन्द्रस्त्वाम्बृहस्पतिः ।
त्वामोषधे सोमो राजा विद्वान्यक्ष्मादमुच्यत ॥९८॥
सहस्व मेऽअरातीः सहस्व पृतनायतः ।
सहस्व सर्वम्पाप्मानꣳ सहमानास्योषधे ॥९९॥
दीर्घायुस्तऽओषधे खनिता यस्मै च त्वा खनाम्यहम् ।
अथो त्वन्दीर्घायुर्भूत्वा शतवल्शा विरोहतात् ॥१००॥
त्वमुत्तमास्योषधे तव वृक्षाऽउपस्तयः ।
उपस्तिरस्तु सोऽस्माकँय्योऽअस्माँ२॥ऽअभिदासति ॥१०१॥

॥७॥ मा मा हिꣳसीज्जनिता यः पृथिव्या यो वा दिवꣳ सत्यधर्म्मा व्यानट् ।
यश्चापश्चन्द्राः प्प्रथमो जजान कस्मै देवाय हविषा विधेम ॥१०२॥
अभ्यावर्त्तस्व पृथिवि यज्ञेन पयसा सह । वपान्तेऽअग्निरिषितोऽअरोहत् ॥१०३॥
अग्ने यत्ते शुक्रँय्यच्चन्द्रँय्यत्पूतँय्यच्च यज्ञियम् । तद्देवेभ्यो भरामसि ॥१०४॥
इषमूर्जमहमितऽआदमृतस्य योनिम्महिषस्य धाराम् ।
आ मा गोषु विशत्वा तनूषु जहामि सेदिमनिराममीवाम् ॥१०५॥

अग्ने तव श्रवो वयो महि भ्राजन्तेऽअर्चयो विभावसो ।
बृहद्भानो शवसा वाजमुक्थ्यन्दधासि दाशुषे कवे ॥१०६॥
पावकवर्चाः शुक्रवर्चाऽअनूनवर्चाऽउदियर्षि भानुना ।
पुत्रो मातरा विचरन्नुपावसि पृणक्षि रोदसीऽउभे ॥१०७॥
ऊर्ज्जो नपाज्जातवेदः सुशस्तिभिर्म्मन्दस्व धीतिभिर्हितः ।
त्वेऽइषः सन्दधुर्भूरिवर्प्पसश्चित्रोतयो वामजाताः ॥१०८॥
इरज्यन्नग्ने प्प्रथयस्व जन्तुभिरस्मे रायोऽअमर्त्य ।
स दर्शतस्य वपुषो विराजसि पृणक्षि सानसिङ्क्रतुम् ॥१०९॥
इष्कर्त्तारमध्वरस्य प्प्रचेतसङ्क्षयन्तꣳ राधसो महः ।
रातिँव्वामस्य सुभगाम्महीमिषन्दधासि सानसिꣳ रयिम् ॥११०॥
ऋतावानम्महिषँव्विश्वदर्शतमग्निꣳ सुम्नाय दधिरे पुरो जनाः ।
श्रुत्कर्ण्णꣳ सप्प्रथस्तमन्त्वा गिरा दैव्यम्मानुषा युगा ॥१११॥
आप्प्यायस्व समेतु ते विश्वतः सोम वृष्ण्यम् । भवा वाजस्य सङ्गथे ॥११२॥
सन्ते पयाꣳसि समु यन्तु वाजाः सँव्वृष्ण्यान्यभिमातिषाहः ।
आप्प्यायमानोऽअमृताय सोम दिवि श्रवाꣳस्युत्तमानि धिष्व ॥११३॥
आप्प्यायस्व मदिन्तम सोम विश्वेभिरꣳशुभिः ।
भवा नः सप्प्रथस्तमः सखा वृधे ॥११४॥
आ ते वत्सो मनो यमत्परमाच्चित्सधस्थात् । अग्ने त्वाङ्कामया गिरा ॥११५॥
तुभ्यन्ताऽअङ्गिरस्तम विश्वाः सुक्षितयः पृथक् । अग्ने कामाय येमिरे ॥११६॥
अग्निः प्प्रियेषु धामसु कामो भूतस्य भव्यस्य । सम्म्राडेको विराजति ॥११७॥

॥ इति द्वादशोऽध्यायः ॥

# अथ त्रयोदशोऽध्यायः

ऋषिः (१) 'मयि गृह्णामि' इत्यारभ्य (५८) 'इयमुपरि' इत्यन्तानां सामान्यतः प्रजापतिः साध्या वा ऋषयः । विशेषतश्च—
(४) 'हिरण्यगर्भः समवर्तत' इत्यस्य हिरण्यगर्भः, (५) 'द्रप्सश्चस्कन्द' इत्यस्य देवश्रवाः, (९) 'कृणुष्व पाजः' इत्यारभ्य (१३) 'ऊर्ध्वो भव' इत्यन्तानां देवा वामदेवश्च, (१४) 'अग्निर्मूर्धा' इत्यस्य विरूपः, (१५) 'भुवो यज्ञस्य' इत्यस्य त्रिशिराः, (२०) 'काण्डात्काण्डात' (२१) 'या शतेन' इत्यनयोरग्निः, (२२) 'यास्ते अग्ने' (२३) 'या वो देवाः' इत्यनयोरिन्द्राग्नी, (२६) 'अषाढासि' इत्यस्य सविता देवा वा, (२७) 'मधु वाताः' (२८) 'मधु नक्तम्' (२९) 'मधुमान्नः' इत्येषां गोतमः, (३२) 'मही द्यौः' (३३) 'विष्णोः कर्माणि' इत्यनयोर्मेधातिथिः, (३६) 'अग्ने

युक्ष्वा' इत्यस्य भरद्वाजः, (३७) 'युक्ष्वा हि' इत्यस्य विरूपः, (४६) 'चित्रन्देवानाम्' इत्यस्याङ्गिरसः कुत्सः, (५२) 'त्वं यविष्ठ' इत्यस्य काव्य उशानाः ॥

देवता (१) 'मयि गृह्णामि' इत्यस्याग्निः ।
(२) 'अपाम्पृष्ठम्' इत्यस्य पुष्करपर्णम् ।
(३) 'ब्रह्म जज्ञानम्' इत्यस्यादित्यः ।
(४) 'हिरण्यगर्भः समवर्तत' इत्यस्य कः ।
(५) 'द्रप्सश्चस्कन्द' इत्यस्यादित्यः ।
(६) 'नमोस्तु सर्पेभ्यः' (७) 'या इषवः' (८) 'ये वामी' इत्येषां सर्पाः ।
(९) 'कृणुष्व पाजः' (१०) 'तव भ्रमासः' (११) 'प्रति स्पशः' (१२) 'उदग्ने तिष्ठ' (१३) 'ऊर्ध्वो भव' 'अग्नेष्ट्वा' (१४) 'अग्निर्मूर्धा' इत्येषामग्निः, 'इन्द्रस्य त्वा' इत्यस्येन्द्रः ।
(१५) 'भुवो यज्ञस्य' इत्यस्याग्निः ।
(१६) 'ध्रुवासि' (१७) 'प्रजापतिष्ट्वा' (१८) 'भूरसि' (१९) 'विश्वस्मै प्राणाय' इत्येषां स्वयमातृण्णा ।
(२०) 'काण्डात्काण्डात्' 'या शतेन' इत्यनयोर्दूर्वेष्टका ।
(२२) 'यास्ते' (२३) 'या वो देवाः' इत्यनयोरग्निः ।
(२४) 'विराड्ज्योतिः' 'स्वराड्ज्योतिः' इत्यनयोर्लोकः, 'प्रजापतिष्ट्वा' इत्यस्य विश्वज्योतिः ।
(२५) 'मधुश्च माधवश्च' इत्यस्य ऋतवः ।
(२६) 'अषाढासि' इत्यस्येष्टका ।
(२७) 'मधु वाताः' (२८) 'मधु नक्तम्' (२९) 'मधुमान्नः' इत्येषां विश्वे देवाः ।
(३०) 'अपाङ्गम्भन्' (३१) 'त्रीन्त्समुद्रान्' इत्यनयोः कूर्मः ।
(३२) 'मही द्यौः' इत्यस्य द्यावापृथिव्यौ ।
(३३) 'विष्णोः कर्माणि' इत्यस्य विष्णुः ।
(३४) 'ध्रुवासि' (३५) 'इषे राये' इत्यनयोरुखा ।
(३६) 'अग्ने युक्ष्वा' 'युक्ष्वा हि' इत्यनयोरग्निः ।
(३८) 'सम्यक्स्रवन्ति' (३९) 'ऋचे त्वा' (४०) 'अग्निर्ज्योतिषा' इत्येषां लिङ्गोक्ता ।
(४१) 'आदित्यङ्गर्भम्' (४२) 'वातस्य जूतिम्' (४३) 'अजस्रमिन्दुम्' (४४) 'वरूत्रीन्त्वष्टुः' (४५) 'यो अग्निः' इत्येषामग्निः ।
(४६) 'चित्रन्देवानाम्' इत्यस्य सूर्यः ।
(४७) 'इमम्मा हिंसीर्द्विपादम्' (४८) 'इमम्मा हिंसीरेकशफम्' (४९) 'इमं साहस्रम्' (५०) 'इममूर्णायुम्' (५१) 'अजो ह्यग्नेः' (५२) 'त्वं यविष्ठ' इत्येषामग्निः ।
(५३) 'अपान्त्वा' इत्यादिपञ्चानाम्, 'अर्णवे त्वा' 'समुद्रे त्वा' 'सरिरे त्वा' इत्येषाम्, 'अपान्त्वा' इत्यादिसप्तानाम्, 'गायत्रेण त्वा' 'त्रैष्टुभेन त्वा' 'जागतेन त्वा' 'आनुष्टुभेन त्वा' 'पाङ्क्तेन त्वा' इत्येषाञ्चेष्टका ।
(५४) 'अयम्पुरः' 'तस्य प्राणः' 'वसन्तः प्राणायनः' 'गायत्री वासन्ती' 'गायत्र्यै गायत्रम्' 'गायत्रादुपांशुः' 'उपांशोस्त्रिवृत्' 'त्रिवृतो रथन्तरम्' 'वसिष्ठ ऋषिः' 'प्रजापतिगृहीतया' (५५) 'अयन्दक्षिणा' 'तस्य मनः' 'ग्रीष्मो मानसः' 'त्रिष्टुब्ग्रैष्मी' 'त्रिष्टुभः स्वारम्' 'स्वारादन्तर्यामः' 'अन्तर्यामात्पञ्चदशः' 'पञ्चदशाद्बृहत्' 'भरद्वाज ऋषिः' 'प्रजापतिगृहीतया' (५६) 'अयम्पश्चात्' 'तस्य चक्षुः' 'वर्षाश्चाक्षुष्यः' 'जगती वार्षी' 'जगत्या ऋक्समम्' 'ऋक्समाच्छुक्रः' 'शुक्रात्सप्तदशः' 'सप्तदशाद्वैरूपम्' 'जमदग्निर्ऋषिः' 'प्रजापतिगृहीतया' (५७) 'इदमुत्तरात्' 'तस्य श्रोत्रम्' 'शरच्छ्रौत्री' 'अनुष्टुप्शारदी' 'अनुष्टुभ ऐडम्' 'ऐडान्मन्थी' 'मन्थिन एकविंशः' 'एकविंशाद्वैराजम्' 'विश्वामित्र ऋषिः' 'प्रजापतिगृहीतया' (५८) 'इयमुपरि' 'तस्यै वाङ्माता' 'हेमन्तो वाच्यः' 'पङ्क्तिर्हैमन्ती' 'पङ्क्त्यै निधनवत्' 'निधनवत आग्रयणः' 'आग्रयणात्त्रिणवत्रयस्त्रिंशौ' 'त्रिणवत्रयस्त्रिंशाभ्याम्' 'विश्वकर्म ऋषिः' 'प्रजापतिगृहीतया' इत्येषां प्राणभृतः ॥

छन्दः (१) 'मयि गृह्णामि' इत्यस्य ककुप्, (२) 'अपाम्पृष्ठम्' इत्यस्य स्वराट् पङ्क्तिः, (३) 'ब्रह्म जज्ञानम्' (४) 'हिरण्यगर्भः समवर्तत' (५) 'द्रप्सश्चस्कन्द' इत्येषां त्रिष्टुप्, (६) 'नमोस्तु' (७) 'या इषवः' (८) 'ये वामी' इत्येषामनुष्टुप्, (९) 'कृणुष्व पाजः' इत्यारभ्य (१३) 'ऊर्ध्वो भव' इत्यन्तानां त्रिष्टुप्, 'अग्नेष्ट्वा' 'इन्द्रस्य त्वा' इति क्रमेणोपान्त्ययोर्यजुषी, (१४) 'अग्निर्मूर्धा' इत्यस्य गायत्री, (१५) 'भुवो यज्ञस्य' इत्यस्य त्रिष्टुप्, (१६) 'ध्रुवासि' इत्यस्योर्ध्वबृहती, (१७) 'प्रजापतिष्ट्वा' इत्यस्यानुष्टुप्, (१८) 'भूरसि' इत्यस्य प्रस्तारपङ्क्तिः, (२०) 'काण्डात्काण्डात्' (२१) 'या शतेन' (२२) 'यास्ते अग्ने' (२३) 'या वो देवाः' इत्येषामनुष्टुप्, (२७) 'मधु वाता' (२८) 'मधु नक्तम्' (२९) 'मधुमान्नः' इत्येषां गायत्री, (३०) 'अपाङ्गम्भन्' इत्यस्य पङ्क्तिः, (३१) 'त्रीन्त्समुद्रान्' इत्यस्य त्रिष्टुप्, (३२) 'मही द्यौः' (३३) 'विष्णोः कर्माणि' इत्यनयोर्गायत्री, (३४) 'ध्रुवासि' इत्यस्य त्रिष्टुप्, (३५) 'इषे राये' इत्यस्य बृहती, (३६) 'अग्ने युक्ष्वा' (३७) 'युक्ष्वा हि' इत्यनयोर्गायत्री, (३८) 'सम्यक्स्रवन्ति' इत्यस्य त्रिष्टुप्, (३९) 'ऋचे त्वा' इत्यस्य बृहती, (४०) 'अग्निर्ज्योतिषा' इत्यस्योष्णिक्, (४१) 'आदित्यङ्गर्भम्' इत्यारभ्य (५१) 'अजो ह्यग्नेः' इत्यन्तानां त्रिष्टुप्, (४७–५१) 'इमम्मा' इत्यादिपञ्चस्वप्यन्ते द्वे द्वे यजुषी, (५२) 'त्वं यविष्ठ' इत्यस्य गायत्री ॥

॥ हरिः ॐ ॥

॥१॥ मयि गृह्णाम्म्यग्ग्रेऽअग्निꣳ रायस्प्पोषाय सुप्प्रजास्त्वाय सुवीर्य्याय ।
माम्मु देवताः सचन्ताम् ॥१॥
अपाम्पृष्ठमसि योनिरग्ग्नेः समुद्रमभितः पिन्न्वमानम् ।
वर्द्धमानो महाँ२॥ऽआ च पुष्क्करे दिवो मात्रया वरिम्म्णा प्प्रथस्व ॥२॥
ब्रह्म जज्ज्ञानम्प्रथमम्पुरस्त्ताद्वि सीमतः सुरुचो व्वेनऽआवः ।
स बुद्ध्न्याऽउपमाऽअस्य व्विष्ठाः सतश्च योनिमसतश्च व्विवः ॥३॥
हिरण्ण्यगर्ब्भः समवर्त्तताग्ग्रे भूतस्य जातः पतिरेकऽआसीत् ।
स दाधार पृथिवीन्द्यामुतेमाङ्कस्म्मै देवाय हविषा व्विधेम ॥४॥
द्रप्प्सश्चस्क्कन्द पृथिवीमनु द्यामिमञ्च योनिमनु यश्च पूर्व्वः ।
समानँय्योनिमनु सञ्चरन्तन्द्रप्प्सञ्जुहोम्म्यनु सप्प्त होत्राः ॥५॥
नमोस्त्तु सर्प्पेब्भ्यो ये के च पृथिवीमनु ।
येऽअन्तरिक्क्षे ये दिवि तेब्भ्यः सर्प्पेब्भ्यो नमः ॥६॥
याऽइषवो यातुधानानाँय्ये वा व्वनस्प्पतीँ१॥रनु ।
ये वावटेषु शेरते तेब्भ्यः सर्प्पेब्भ्यो नमः ॥७॥
ये वामी रोचने दिवो ये वा सूर्य्यस्य रश्श्मिषु ।
येषामप्प्सु सदस्कृतन्तेब्भ्यः सर्प्पेब्भ्यो नमः ॥८॥
कृणुष्ष्व पाजः प्प्रसितिन्न पृत्थ्वीँय्याहि राजेवामवाँ२॥ऽइभेन ।
तृष्ष्वीमनु प्प्रसितिन्द्रूणानोस्त्तासि व्विद्ध्य रक्क्षसस्त्तपिष्ठैः ॥९॥

तव भ्रमासऽआशुया पतन्त्यनुस्पृश धृषता शोशुचानः ।
तपूंष्यग्ने जुह्वा पतङ्गानसन्दितो विसृज विष्वगुल्काः ॥१०॥
प्रति स्पशो विसृज तूर्णितमो भवा पायुर्विशोऽअस्याऽअदब्धः ।
यो नो दूरेऽअघशंसो योऽअन्त्यग्ने मा किष्टे व्यथिरादधर्षीत् ॥११॥
उदग्ने तिष्ठ प्रत्त्यातनुष्व न्यमित्राँ॥ऽओषतात्तिग्महेते ।
यो नोऽअरातिं समिधान चक्रे नीचा तन्धक्ष्यतसन्न शुष्कम् ॥१२॥
ऊर्ध्वो भव प्रतिविध्याध्यस्मदाविष्कृणुष्व दैव्यान्यग्ने ।
अव स्थिरा तनुहि यातुजूनाञ्जामिमजामिम्प्रमृणीहि शत्रून् ।
अग्नेष्ट्वा तेजसा सादयामि ॥१३॥
अग्निर्मूर्द्धा दिवः ककुत्पतिः पृथिव्याऽअयम् ।
अपां रेतांसि जिन्वति । इन्द्रस्य त्वौजसा सादयामि ॥१४॥
भुवो यज्ञस्य रजसश्च नेता यत्रा नियुद्भिः सचसे शिवाभिः ।
दिवि मूर्द्धानन्दधिषे स्वर्षाञ्जिह्वामग्ने चकृषे हव्यवाहम् ॥१५॥

॥२॥ ध्रुवासि धरुणास्तृता विश्वकर्म्मणा ।
मा त्वा समुद्रऽउद्वधीन्मा सुपर्णोऽव्यथमाना पृथिवीन्दृंह ॥१६॥
प्रजापतिष्ट्वा सादयत्वपाम्पृष्ठे समुद्रस्येमन् ।
व्यचस्वतीम्प्रथस्वतीम्प्रथस्व पृथिव्यसि ॥१७॥
भूरसि भूमिरस्यदितिरसि विश्वधाया विश्वस्य भुवनस्य धर्त्री ।
पृथिवीँय्यच्छ पृथिवीन्दृंह पृथिवीम्मा हिंसीः ॥१८॥
विश्वस्मै प्राणायापानाय व्यानायोदानाय प्रतिष्ठायै चरित्राय ।
अग्निष्ट्वाभिपातु मह्या स्वस्त्या छर्दिषा शन्तमेन तया
देवतयाङ्गिरस्वद्ध्रुवा सीद ॥१९॥
काण्डात्काण्डात्प्ररोहन्ती परुषः परुषस्परि ।
एवा नो दूर्वे प्रतनु सहस्रेण शतेन च ॥२०॥
या शतेन प्रतनोषि सहस्रेण विरोहसि ।
तस्यास्ते देवीष्टके विधेम हविषा वयम् ॥२१॥
यास्तेऽअग्ने सूर्य्ये रुचो दिवमातन्वन्ति रश्मिभिः ।
ताभिर्नोऽअद्य सर्वाभी रुचे जनाय नस्कृधि ॥२२॥

या वो देवाः सूर्य्ये रुचो गोष्वश्वेषु या रुचः ।
इन्द्राग्नी ताभिः सर्वाभी रुचन्नो धत्त बृहस्पते ॥२३॥
विराड्ज्योतिरधारयत्स्वराड्ज्योतिरधारयत् । प्रजापतिष्ट्वा सादयतु पृष्ठे पृथिव्या
ज्योतिष्मतीम् । विश्वस्मै प्राणायापानाय व्यानाय विश्वञ्ज्योतिर्य्यच्छ ।
अग्निष्टेऽधिपतिस्तया देवतयाङ्गिरस्वद्ध्रुवा सीद ॥२४॥
मधुश्च माधवश्च वासन्तिकावृतूऽअग्नेरन्तःश्लेषोऽसि कल्पेतान्द्यावापृथिवी
कल्पन्तामापऽओषधयः कल्पन्तामग्नयः पृथङ्मम ज्यैष्ठ्याय सव्रताः । येऽ
अग्नयः समनसोऽन्तरा द्यावापृथिवीऽइमे । वासन्तिकावृतूऽअभिकल्पमानाऽइन्द्रमिव
देवाऽअभिसँविशन्तु तया देवतयाङ्गिरस्वद्ध्रुवे सीदतम् ॥२५॥
अषाढासि सहमाना सहस्वारातीः सहस्व पृतनायतः ।
सहस्रवीर्य्यासि सा मा जिन्व ॥२६॥

॥३॥ मधु वाताऽऋतायते मधु क्षरन्ति सिन्धवः । माध्वीर्नः सन्त्वोषधीः ॥२७॥
मधु नक्तमुतोषसो मधुमत्पार्थिवं रजः । मधु द्यौरस्तु नः पिता ॥२८॥
मधुमान्नो वनस्पतिर्मधुमाँ॥ऽअस्तु सूर्य्यः । माध्वीर्गावो भवन्तु नः ॥२९॥
अपाङ्गम्भन्त्सीद मा त्वा सूर्य्योऽभिताप्सीन्माग्निर्वैश्वानरः ।
अच्छिन्नपत्राः प्रजाऽअनुवीक्षस्वानु त्वा दिव्या वृष्टिः सचताम् ॥३०॥
त्रीन्त्समुद्रान्त्समसृपत्स्वर्ग्गानपाम्पतिर्वृषभऽइष्टकानाम् ।
पुरीषँवसानः सुकृतस्य लोके तत्र गच्छ यत्र पूर्वे परेताः ॥३१॥
मही द्यौः पृथिवी च नऽइमँय्यज्ञम्मिमिक्षताम् । पिपृतान्नो भरीमभिः ॥३२॥
विष्णोः कर्म्माणि पश्यत यतो व्रतानि पस्पशे । इन्द्रस्य युज्यः सखा ॥३३॥
ध्रुवासि धरुणेतो जज्ञे प्रथममेभ्यो योनिभ्योऽअधि जातवेदाः ।
स गायत्र्या त्रिष्टुभानुष्टुभा च देवेभ्यो हव्यँवहतु प्रजानन् ॥३४॥
इषे राये रमस्व सहसे द्युम्नऽऊर्जेऽअपत्याय ।
सम्राडसि स्वराडसि सारस्वतौ त्वोत्सौ प्रावताम् ॥३५॥
अग्ने युक्ष्वा हि ये तवाश्वासो देव साधवः । अरँवहन्ति मन्यवे ॥३६॥
युक्ष्वा हि देवहूतमाँ॥ऽअश्वाँ॥ऽअग्ने रथीरिव । नि होता पूर्व्यः सदः ॥३७॥

॥४॥ सम्यक्स्रवन्ति सरितो न धेनाऽअन्तर्हृदा मनसा पूयमानाः ।
घृतस्य धाराऽअभिचाकशीमि हिरण्ययो वेतसो मध्येऽअग्नेः ॥३८॥

ऋचे त्वा रुचे त्वा भासे त्वा ज्योतिषे त्वा ।
अभूदिदँ विश्वस्य भुवनस्य वाजिनमग्नेर्वैश्वानरस्य च ॥३९॥
अग्निर्ज्योतिषा ज्योतिष्मान्रुक्मो वर्चसा वर्चस्वान् ।
सहस्रदाऽअसि सहस्राय त्वा ॥४०॥
आदित्यङ्गर्ब्भम्पयसा समङ्ग्धि सहस्रस्य प्रतिमाँ विश्वरूपम् ।
परिवृङ्ग्धि हरसा माभिमꣳस्थाः शतायुषङ्कृणुहि चीयमानः ॥४१॥
वातस्य जूतिँ वरुणस्य नाभिमश्वञ्जज्ञानꣳ सरिरस्य मद्ध्ये ।
शिशुन्नदीनाꣳ हरिमद्रिबुद्ध्नमग्ने मा हिꣳसीः परमे व्योमन् ॥४२॥
अजस्रमिन्दुमरुषम्भुरण्युमग्निमीडे पूर्वचित्तिन्नमोभिः ।
स पर्वभिर्ऋतुशः कल्पमानो गाम्मा हिꣳसीरदितिँ विराजम् ॥४३॥
वरूत्रीन्त्वष्टुर्वरुणस्य नाभिमविञ्जज्ञानाꣳ रजसः परस्मात् ।
महीꣳ साहस्रीमसुरस्य मायामग्ने मा हिꣳसीः परमे व्योमन् ॥४४॥
योऽअग्निरग्नेरद्ध्यजायत शोकात्पृथिव्याऽउत वा दिवस्परि ।
येन प्रजा विश्वकर्म्मा जजान तमग्ने हेडः परि ते वृणक्तु ॥४५॥
चित्रन्देवानामुदगादनीकञ्चक्षुर्मित्रस्य वरुणस्याग्नेः ।
आप्रा द्यावापृथिवीऽअन्तरिक्षꣳ सूर्य्यऽआत्मा जगतस्तस्थुषश्च ॥४६॥

॥५॥ इमम्मा हिꣳसीर्द्विपादम्पशुꣳ सहस्राक्षो मेधाय चीयमानः ।
मयुम्पशुम्मेधमग्ने जुषस्व तेन चिन्वानस्तन्वो निषीद ।
मयुन्ते शुगृच्छतु यन्द्विष्मस्तन्ते शुगृच्छतु ॥४७॥
इमम्मा हिꣳसीरेकशफम्पशुङ्कनिक्रदँ वाजिनँ वाजिनेषु ।
गौरमारण्यमनु ते दिशामि तेन चिन्वानस्तन्वो निषीद ।
गौरन्ते शुगृच्छतु यन्द्विष्मस्तन्ते शुगृच्छतु ॥४८॥
इमꣳ साहस्रꣳ शतधारमुत्सँ व्यच्यमानꣳ सरिरस्य मद्ध्ये । घृतन्दुहानामदितिञ्ज-
नायाग्ने मा हिꣳसीः परमे व्योमन् । गवयमारण्यमनु ते दिशामि तेन चिन्वा-
नस्तन्वो निषीद । गवयन्ते शुगृच्छतु यन्द्विष्मस्तन्ते शुगृच्छतु ॥४९॥
इममूर्णायुँ वरुणस्य नाभिन्त्वचम्पशूनान्द्विपदाञ्चतुष्पदाम् । त्वष्टुः प्रजानाम्प्रथम-
ञ्जनित्रमग्ने मा हिꣳसीः परमे व्योमन् । उष्ट्रमारण्यमनु ते दिशामि तेन
चिन्वानस्तन्वो निषीद । उष्ट्रन्ते शुगृच्छतु यन्द्विष्मस्तन्ते शुगृच्छतु ॥५०॥

अजो ह्यग्नेरजनिष्ट शोकात्सोऽअपश्यज्जनितारमग्रे । तेन देवा देवतामग्रमायँ-
स्तेन रोहमायन्नुप मेद्ध्यासः । शरभमारण्यमनु ते दिशामि तेन चिन्वानस्तन्वो
निषीद । शरभन्ते शुगृच्छतु यन्द्विष्मस्तन्ते शुगृच्छतु ॥५१॥
त्वँ यविष्ठ दाशुषो नॄँः पाहि शृणुधी गिरः । रक्षा तोकमुत त्मना ॥५२॥

॥६॥ अपान्त्वेमन्त्सादयाम्यपान्त्वोद्मन्त्सादयाम्यपान्त्वा भस्मन्त्सादयाम्यपान्त्वा ज्योति-
तिषि सादयाम्यपान्त्वायने सादयाम्यर्णवे त्वा सदने सादयामि समुद्रे त्वा
सदने सादयामि सरिरे त्वा सदने सादयाम्यपान्त्वा क्षये सादयाम्यपान्त्वा सधिषि
सादयाम्यपान्त्वा सदने सादयाम्यपान्त्वा सधस्थे सादयाम्यपान्त्वा योनौ
सादयाम्यपान्त्वा पुरीषे सादयाम्यपान्त्वा पाथसि सादयामि गायत्रेण त्वा च्छन्दसा
सादयामि त्रैष्टुभेन त्वा च्छन्दसा सादयामि जागतेन त्वा च्छन्दसा सादयाम्या-
नुष्टुभेन त्वा च्छन्दसा सादयामि पाङ्क्तेन त्वा च्छन्दसा सादयामि ॥५३॥

॥७॥ अयम्पुरो भुवस्तस्य प्राणो भौवायनो वसन्तः प्राणायनो गायत्री वासन्ती गायत्र्यै
गायत्रङ्गायत्रादुपाꣳशुरुपाꣳशोस्त्रिवृत्त्रिवृतो रथन्तरँ वसिष्ठऽऋषिः प्रजापति-
गृहीतया त्वया प्राणङ्गृह्णामि प्रजाभ्यः ॥५४॥
अयन्दक्षिणा विश्वकर्म्मा तस्य मनो वैश्वकर्म्मणङ्ग्रीष्मो मानसस्त्रिष्टुब्ग्रैष्मी
त्रिष्टुभः स्वारꣳ स्वारादन्तर्य्यामोऽन्तर्य्यामात्पञ्चदशः पञ्चदशाद्बृहद्बृहद्भरद्वाजऽऋषिः
प्रजापतिगृहीतया त्वया मनो गृह्णामि प्रजाभ्यः ॥५५॥
अयम्पश्चाद्विश्वव्यचास्तस्य चक्षुर्वैश्वव्यचसँ वर्षाश्चाक्षुष्यो जगती वार्षी जगत्या
ऽऋक्समम्मृक्समाच्छुक्रः शुक्रात्सप्तदशः सप्तदशाद्वैरूपञ्जमदग्निर्ऋषिः प्रजा-
पतिगृहीतया त्वया चक्षुर्गृह्णामि प्रजाभ्यः ॥५६॥
इदमुत्तरात्स्वस्तस्य श्रोत्रꣳ सौवꣳ शरच्छ्रौत्र्यनुष्टुप्शारद्यनुष्टुभऽऐडमैडान्मन्थी
मन्थिनऽएकविꣳशऽएकविꣳशाद्वैराजँ विश्वामित्रऽऋषिः प्रजापतिगृहीतया त्वया
श्रोत्रङ्गृह्णामि प्रजाभ्यः ॥५७॥
इयमुपरि मतिस्तस्यै वाङ्मात्या हेमन्तो वाच्यः पङ्क्तिर्हैमन्ती पङ्क्त्यै निधनवन्निधन-
वतऽआग्रयणऽआग्रयणात्त्रिणवत्रयस्त्रिꣳशौ त्रिणवत्रयस्त्रिꣳशाभ्याꣳ शाक्वररै-
वते विश्वकर्म्मऽऋषिः प्रजापतिगृहीतया त्वया वाचङ्गृह्णामि प्रजाभ्यो लोकन्ताऽ
इन्द्रम् ॥५८॥

गलितमन्त्राः —

लोकम्पृण च्छिद्द्रम्पृणाथो सीद ध्रुवा त्वम् ।
इन्द्राग्नी त्वा बृहस्पतिरस्मिन्योनावसीषदन् ॥
ताऽअस्य सूददोहसः सोमꣳ श्रीणन्ति पृश्नयः ।
जन्मन्देवानांविशस्त्रिष्वा रोचने दिवः ॥
इन्द्रंविश्वाऽअवीवृधन्त्समुद्रव्यचसङ्गिरः ।
रथीतमꣳ रथीनांवाजानाꣳ सत्पतिम्पतिम् ॥

॥ इति त्रयोदशोऽध्यायः ॥

# अथ चतुर्दशोऽध्यायः

ऋषिः (१) 'ध्रुवक्षितिर्ध्रुवयोनिः' इत्यारभ्य (३१) 'नवविꣳशत्यास्तुवत' इत्यन्तानां सामान्यतः प्रजापतिः साध्या वा ऋषयः । विशेषतश्च—

(१) 'ध्रुवक्षितिर्ध्रुवयोनिः' इत्यारभ्य (१०) 'अनड्वान्वयः' इत्यन्तानां देवाः । तत्रापि-(७) 'सजूर्ऋतुभिः' इत्यादिपञ्चानां विश्वे देवाः ।

(११) 'इन्द्राग्नी अव्यथमानाम्' इत्यारभ्य (२२) 'यन्त्री राट्' इत्यन्तानामिन्द्राग्नी विश्वकर्मा च ।

(२३) 'आशुस्त्रिवृत्' इत्यारभ्य (३१) 'नवविꣳशत्यास्तुवत' इत्यन्तानामृषयः ।

देवता (१) 'ध्रुवक्षितिर्ध्रुवयोनिः' (२) 'कुलायिनी घृतवती' (३) 'स्वैर्दक्षैः' (४) 'पृथिव्याः पुरीषम्' (५) 'अदित्यास्त्वा' इत्येषामश्विनौ ।

(६) 'शुक्रश्च शुचिश्च' इत्यस्य ऋतवः ।

(७) 'सजूर्ऋतुभिः' इत्यादिपञ्चानां विश्वे देवाः ।

(८) 'प्राणम्मे' 'अपानम्मे' 'व्यानम्मे' 'चक्षुर्मे' 'श्रोत्रम्मे' इत्येषां वायुः, 'अपः पिन्व' 'ओषधीर्जिन्व' 'द्विपादव' 'चतुष्पात्पाहि' 'दिवो वृष्टिम्' इत्येषामापः ।

(९) 'मूर्धा वयः' 'क्षत्रं वयः' 'विष्टम्भो वयः' 'विश्वकर्मा वयः' 'वस्तो वयः' 'वृष्णिर्वयः' 'पुरुषो वयः' 'व्याघ्रो वयः' 'सिꣳहो वयः' 'पष्ठवाड्वयः' 'उक्षा वयः' 'ऋषभो वयः' (१०) 'अनड्वान्वयः' 'धेनुर्वयः' 'त्र्यविर्वयः' 'दित्यवाड्वयः' 'पञ्चाविर्वयः' 'त्रिवत्सो वयः' 'तुर्यवाड्वयः' इत्येषां लिङ्गोक्ता ।

(११) 'इन्द्राग्नी अव्यथमानाम्' इत्यस्येन्द्राग्नी, 'पृष्ठेन द्यावापृथिवी' इत्यस्य स्वयमातृण्णा ।

(१२) 'विश्वकर्मा त्वा' इत्यस्य वायुः ।

(१३) 'राज्ञ्यसि' 'विराडसि' 'सम्राडसि' 'स्वराडसि' 'अधिपत्न्यसि' इत्येषां दिशः ।

(१४) 'विश्वकर्मा त्वा' इत्यस्य वायुः ।

(१५) 'नभश्च नभस्यश्च' (१६) 'इषश्चोर्जश्च' इत्यनयोर्ऋतवः ।

(१७) 'आयुर्मे' 'प्राणम्मे' 'अपानम्मे' 'व्यानम्मे' 'चक्षुर्मे' 'श्रोत्रम्मे' 'वाचम्मे' 'मनो मे' 'आत्मानम्मे' 'ज्योतिर्मे' (१८) 'मा च्छन्दः' 'प्रमा च्छन्दः' 'प्रतिमा च्छन्दः' 'अस्रीवयश्छन्दः' 'पङ्क्तिश्छन्दः' 'उष्णिक्छन्दः' 'बृहती च्छन्दः' 'अनुष्टुप्छन्दः' 'विराट् छन्दः' 'गायत्री च्छन्दः' 'त्रिष्टुप् छन्दः' 'जगती च्छन्दः' (१९) 'पृथिवी च्छन्दः' 'अन्तरिक्षञ्छन्दः' 'द्यौश्छन्दः' 'समाश्छन्दः' 'नक्षत्राणि च्छन्दः' 'वाक्छन्दः' 'मनश्छन्दः' 'कृषिश्छन्दः' 'हिरण्यञ्छन्दः' 'गौश्छन्दः' 'अजा च्छन्दः' 'अश्वश्छन्दः' (२०) 'अग्निर्देवता' 'वातो देवता' 'सूर्यो देवता' 'चन्द्रमा देवता' 'वसवो देवता' 'रुद्रा देवता' 'आदित्या देवता' 'मरुतो देवता' 'विश्वे देवा देवता' 'बृहस्पतिर्देवता' 'इन्द्रो देवता' 'वरुणो देवता' इत्येषां लिङ्गोक्ता ।

(२१) 'मूर्धासि' 'ध्रुवासि' 'धर्त्र्यसि' 'आयुषे त्वा' 'वर्चसे त्वा' 'कृष्यै त्वा' 'क्षेमाय त्वा' (२२) 'यन्त्री राट्' 'यन्त्र्यसि' 'ध्रुवासि' 'इषे त्वा' 'ऊर्जे त्वा' 'रय्यै त्वा' 'पोषाय त्वा' इत्येषां प्राणः ।

(२३) 'आशुस्त्रिवृत्' 'भान्तः पञ्चदशः' 'व्योमा सप्तदशः' 'धरुण एकविꣳशः' 'प्रतूर्तिरष्टादशः' 'तपो नवदशः' 'अभीवर्तः सविꣳशः' 'वर्चो द्वाविꣳशः' 'सम्भरणस्त्रयोविꣳशः' 'योनिश्चतुर्विꣳशः' 'गर्भाः पञ्चविꣳशः' 'ओजस्त्रिणवः' 'क्रतुरेकत्रिꣳशः' 'प्रतिष्ठा त्रयस्त्रिꣳशः' 'ब्रध्नस्य विष्टपम्' 'नाकः षट्त्रिꣳशः' 'विवर्तोऽष्टाचत्वारिꣳशः' 'धर्त्रञ्चतुष्टोमः' (२४) 'अग्नेर्भागः' 'इन्द्रस्य भागः' 'नृचक्षसाम्भागः' 'मित्रस्य भागः' (२५) 'वसूनाम्भागः' 'आदित्यानाम्भागः' 'अदित्यै भागः' 'देवस्य सवितुः' (२६) 'यवानाम्भागः' 'ऋभूणाम्भागः' इत्येषां लिङ्गोक्ता ।

(२७) 'सहश्च सहस्यश्च' इत्यस्य ऋतवः ।

(२८) 'एकयास्तुवत' 'तिसृभिरस्तुवत' 'पञ्चभिरस्तुवत' 'सप्तभिरस्तुवत' (२९) 'नवभिरस्तुवत' 'एकादशभिरस्तुवत' 'त्रयोदशभिरस्तुवत' 'पञ्चदशभिरस्तुवत' 'सप्तदशभिरस्तुवत' (३०) 'नवदशभिरस्तुवत' 'एकविꣳशत्यास्तुवत' 'त्रयोविꣳशत्यास्तुवत' 'पञ्चविꣳशत्यास्तुवत' 'सप्तविꣳशत्यास्तुवत' (३१) 'नवविꣳशत्यास्तुवत' 'एकत्रिꣳशत्यास्तुवत' 'त्रयस्त्रिꣳशतास्तुवत' इत्येषां लिङ्गोक्ता ॥

छन्दः (१) 'ध्रुवक्षितिर्ध्रुवयोनिः' इत्यस्य विराट्, (२) 'कुलायिनी घृतवती' (३) 'स्वैर्दक्षैः' (४) 'पृथिव्याः पुरीषम्' (५) 'अदित्यास्त्वा' इत्येषां त्रिष्टुप्, पञ्चस्वप्यन्ते 'अश्विनाध्वर्यू' इति यजुः, (११) 'इन्द्राग्नी अव्यथमानाम्' (२१) 'मूर्धासि' इत्यनयोरनुष्टुप्, (२२) 'यन्त्री राट्' इत्यस्य परोष्णिक् ॥

॥ हरिःॐ ॥

॥१॥ ध्रुवक्षितिर्ध्रुवयोनिर्ध्रुवासि ध्रुवंयोनिमासीद साधुया ।
उख्यस्य केतुम्प्रथमञ्जुषाणाश्विनाध्वर्यू सादयतामिह त्वा ॥१॥
कुलायिनी घृतवती पुरन्धिः स्योने सीद सदने पृथिव्याः । अभि त्वा रुद्रा वसवो
गृणन्त्विमा ब्रह्म पीपिहि सौभगायाश्विनाध्वर्यू सादयतामिह त्वा ॥२॥
स्वैर्दक्षैर्दक्षपितेह सीद देवानाꣳ सुम्ने बृहते रणाय । पितेवैधि सूनवऽआ सुशेवा
स्वावेशा तन्वा संविशस्वाश्विनाध्वर्यू सादयतामिह त्वा ॥३॥
पृथिव्याः पुरीषमस्यप्सो नाम तान्त्वा विश्वेऽअभिगृणन्तु देवाः । स्तोमपृष्ठा
घृतवतीह सीद प्रजावदस्मे द्रविणायजस्वाश्विनाध्वर्यू सादयतामिह त्वा ॥४॥
अदित्यास्त्वा पृष्ठे सादयाम्यन्तरिक्षस्य धर्त्रीविष्टम्भनीन्दिशामधिपत्नीम्भुवना-
नाम् । ऊर्मिर्द्रप्सोऽअपामसि विश्वकर्म्मा तऽऋषिरश्विनाध्वर्यू सादयतामिह
त्वा ॥५॥
शुक्रश्च शुचिश्च ग्रैष्म्मावृतूऽअग्नेरन्तःश्लेषोसि कल्पेतान्द्यावापृथिवी कल्पन्ता-
मापऽओषधयः कल्पन्तामग्नयः पृथङ्मम ज्यैष्ठ्याय सव्रताः । येऽअग्नयः

समनसोन्तरा द्यावापृथिवीऽइमे । ग्रैष्म्मावृतूऽअभिकल्प्पमानाऽइन्द्रमिव देवाऽअभि-
सँविशन्तु तया देवतयाङ्गिरस्वद्ध्रुवे सीदतम् ॥६॥
॥२॥ सजूर्ऋतुभिः सजूर्व्विधाभिः सजूर्द्देवैः सजूर्द्देवैर्व्वयोनाधैरग्नये त्वा वैश्वानरायाश्वि-
नाद्ध्वर्य्यू सादयतामिह त्वा सजूर्ऋतुभिः सजूर्व्विधाभिः सजूर्व्वसुभिः सजूर्द्देवैर्व्व-
योनाधैरग्नये त्वा वैश्वानरायाश्विनाद्ध्वर्य्यू सादयतामिह त्वा सजूर्ऋतुभिः सजूर्व्वि-
धाभिः सजू रुद्रैः सजूर्द्देवैर्व्वयोनाधैरग्नये त्वा वैश्वानरायाश्विनाद्ध्वर्य्यू सादयतामिह
त्वा सजूर्ऋतुभिः सजूर्व्विधाभिः सजूरादित्त्यैः सजूर्द्देवैर्व्वयोनाधैरग्नये त्वा वैश्वा-
नरायाश्विनाद्ध्वर्य्यू सादयतामिह त्वा सजूर्ऋतुभिः सजूर्व्विधाभिः सजूर्व्विश्वैर्द्देवैः
सजूर्द्देवैर्व्वयोनाधैरग्नये त्वा वैश्वानरायाश्विनाद्ध्वर्य्यू सादयतामिह त्वा ॥७॥
प्प्राणम्मे पाह्यपानम्मे पाहि व्यानम्मे पाहि चक्क्षुर्म्मऽउर्व्या विभाहि श्श्रोत्रम्मे श्श्लो-
कय । अपः पिन्वौषधीर्जिन्व द्विपादव चतुष्प्पात्पाहि दिवो वृष्टिमेरय ॥८॥
॥३॥ मूर्द्धा वयः प्प्रजापतिश्छन्दः क्क्षत्रँवयो मयन्दञ्छन्दो विष्टम्भो वयोधिपतिश्छन्दो
विश्वकर्म्मा वयः परमेष्ठी च्छन्दो बस्तो वयो विवलञ्छन्दो वृष्ण्णिर्व्वयो विशालञ्छ-
न्दः पुरुषो वयस्तन्द्रञ्छन्दो व्याग्घ्रो वयोनाधृष्टञ्छन्दः सिꣳहो वयश्छदिश्छन्दः
पष्ठवाड्वयो बृहती च्छन्दऽउक्क्षा वयः ककुप्छन्दऽऋषभो वयः सतोबृहती च्छन्दो-
नड्वान्वयः ॥९॥
अनड्वान्वयः पङ्क्तिश्छन्दो धेनुर्व्वयो जगती च्छन्दस्त्र्यविर्व्वयस्त्रिष्टुप्छन्दो दित्त्यवा-
ड्वयो विराट्छन्दः पञ्चाविर्व्वयो गायत्री च्छन्दस्त्रिवत्सो वयऽउष्ण्णिक्छन्दस्तुर्य्यवा-
ड्वयोनुष्टुप्छन्दो लोकन्ताऽइन्द्रम् ॥१०॥

---

गलितमन्त्राः —

लोकम्पृण च्छिद्रम्पृणाथो सीद ध्रुवा त्वम् ।
इन्द्राग्नी त्वा बृहस्प्पतिरस्मिन्योनावसीषदन् ॥
ताऽअस्य सूददोहसः सोमꣳ श्रीणन्ति पृश्नयः ।
जन्मन्देवानाँविशस्त्रिष्वा रोचने दिवः ॥
इन्द्रँविश्वाऽअवीवृधन्त्समुद्रव्यचसङ्गिरः ।
रथीतमꣳ रथीनाँवाजानाꣳ सत्पतिम्पतिम् ॥

---

॥४॥ इन्द्राग्नीऽअव्यथमानामिष्टकान्दꣳहतँय्युवम् ।
पृष्ठेन द्यावापृथिवीऽअन्तरिक्क्षञ्च विबाधसे ॥११॥
विश्वकर्म्मा त्वा सादयत्वन्तरिक्क्षस्य पृष्ठे व्यचस्वतीम्प्रथस्वतीमन्तरिक्क्षँय्यच्छान्त-
रिक्क्षन्दꣳहान्तरिक्क्षम्मा हिꣳसीः । विश्वस्म्मै प्प्राणायापानाय व्यानायोदानाय
प्प्रतिष्ठायै चरित्राय । वायुष्ट्वाभिपातु मह्या स्वस्त्त्या च्छर्द्दिषा शन्तमेन तया देवतया-
ङ्गिरस्वद्ध्रुवा सीद ॥१२॥
राज्ञ्यसि प्प्राची दिग्विराडसि दक्क्षिणा दिक्सम्म्राडसि प्प्रतीची दिक्स्वराडस्युदीची
दिगधिपत्न्यसि बृहती दिक् ॥१३॥
विश्वकर्म्मा त्वा सादयत्वन्तरिक्क्षस्य पृष्ठे ज्ज्योतिष्म्मतीम् । विश्वस्म्मै प्प्राणाया-
पानाय व्यानाय विश्वञ्ज्योतिर्य्यच्छ । वायुष्टेधिपतिस्तया देवतयाङ्गिरस्वद्ध्रुवा
सीद ॥१४॥
नभश्च नभस्यश्च वार्षिकावृतूऽअग्नेरन्तःश्लेषोसि कल्प्पेतान्द्यावापृथिवी कल्प्पन्तामा-
पऽओषधयः कल्प्पन्तामग्नयः पृथङ्मम ज्ज्यैष्ठ्याय सव्रताः । येऽअग्नयः समन-
सोन्तरा द्यावापृथिवीऽइमे । वार्षिकावृतूऽअभिकल्प्पमानाऽइन्द्रमिव देवाऽअभिसँवि-
शन्तु तया देवतयाङ्गिरस्वद्ध्रुवे सीदतम् ॥१५॥
इषश्चोर्ज्जश्च शारदावृतूऽअग्नेरन्तःश्लेषोसि कल्प्पेतान्द्यावापृथिवी कल्प्पन्तामापऽ
ओषधयः कल्प्पन्तामग्नयः पृथङ्मम ज्ज्यैष्ठ्याय सव्रताः । येऽअग्नयः समनसोन्तरा
द्यावापृथिवीऽइमे । शारदावृतूऽअभिकल्प्पमानाऽइन्द्रमिव देवाऽअभिसँविशन्तु तया
देवतयाङ्गिरस्वद्ध्रुवे सीदतम् ॥१६॥
॥५॥ आयुर्म्मे पाहि प्प्राणम्मे पाह्यपानम्मे पाहि व्यानम्मे पाहि चक्क्षुर्म्मे पाहि श्श्रोत्रम्मे
पाहि वाचम्मे पिन्व मनो मे जिन्वात्त्मानम्मे पाहि ज्ज्योतिर्म्मे यच्छ ॥१७॥
मा च्छन्दः प्प्रमा च्छन्दः प्प्रतिमा च्छन्दोऽअस्त्रीवयश्छन्दः पङ्क्तिश्छन्दऽ
उष्ण्णिक्छन्दो बृहती च्छन्दोनुष्टुप्छन्दो विराट्छन्दो गायत्री च्छन्दस्त्रिष्टुप्छन्दो
जगती च्छन्दः पृथिवी च्छन्दः ॥१८॥
पृथिवी च्छन्दोन्तरिक्क्षञ्छन्दो द्यौश्छन्दः समाश्छन्दो नक्क्षत्राणि च्छन्दो वाक्छन्दो
मनश्छन्दः कृषिश्छन्दो हिरण्ण्यञ्छन्दो गौश्छन्दोजा च्छन्दोश्वश्छन्दः ॥१९॥
अग्निर्द्देवता वातो देवता सूर्य्यो देवता चन्द्रमा देवता वसवो देवता रुद्रा देवतादित्त्या
देवता मरुतो देवता विश्वे देवा देवता बृहस्प्पतिर्द्देवतेन्द्रो देवता वरुणो देवता ॥२०॥
मूर्द्धासि राड्ध्रुवासि धरुणा धर्त्र्यसि धरणी ।
आयुषे त्वा वर्चसे त्वा कृष्यै त्वा क्षेमाय त्वा ॥२१॥

यन्त्री राड्यन्त्र्यसि यमनी ध्रुवासि धरित्री ।
इषे त्वोर्ज्जे त्वा रय्यै त्वा पोषाय त्वा लोकन्ताऽइन्द्रम् ॥२२॥

गलितमन्त्राः —

लोकम्पृण च्छिद्द्रम्पृणाथो सीद ध्रुवा त्वम् ।
इन्द्राग्ग्नी त्वा बृहस्पतिरस्मिन्न्योनावसीषदन् ॥
ताऽअस्य सूददोहसः सोमꣳ श्रीणन्ति पृश्नयः ।
जन्मन्देवानाँविशस्त्रिष्ष्वा रोचने दिवः ॥
इन्द्रँविश्वाऽअवीवृधन्त्समुद्रव्यचसङ्गिरः ।
रथीतमꣳ रथीनाँवाजानाꣳ सत्पतिम्पतिम् ॥

॥६॥ आशुस्त्रिवृद्भान्तः पञ्चदशो व्योमा सप्तदशो धरुणऽएकविꣳशः प्रतूर्त्तिरष्टा-
दशस्तपो नवदशोभीवर्त्तः सविꣳशो वर्चो द्वाविꣳशः सम्भरणस्त्रयोविꣳशो
योनिश्चतुर्विꣳशो गर्ब्भाः पञ्चविꣳशऽओजस्त्रिणवः क्रतुरेकत्रिꣳशः प्रतिष्ठा
त्रयस्त्रिꣳशो ब्रध्नस्य विष्टपञ्चतुस्त्रिꣳशो नाकः षट्त्रिꣳशो विवर्त्तोष्टाचत्वारिꣳशो
धर्त्रञ्चतुष्टोमः ॥२३॥

॥७॥ अग्ग्नेर्ब्भागोसि दीक्षायाऽआधिपत्यम्ब्रह्म स्पृतन्त्रिवृत्स्तोमऽइन्द्रस्य भागोसि
विष्णोराधिपत्यङ्क्षत्रꣳ स्पृतम्पञ्चदश स्तोमो नृचक्षसाम्भागोसि धातुराधि-
पत्यञ्जनित्रꣳ स्पृतꣳ सप्तदश स्तोमो मित्रस्य भागोसि वरुणस्याधिपत्यन्दिवो
वृष्टिर्व्वात स्पृतऽएकविꣳश स्तोमो वसूनाम्भागः ॥२४॥
वसूनाम्भागोसि रुद्राणामाधिपत्यञ्चतुष्पात्स्पृतञ्चतुर्विꣳश स्तोमऽआदित्यानाम्भा-
गोसि मरुतामाधिपत्यङ्गर्ब्भा स्पृताः पञ्चविꣳश स्तोमोदित्यै भागोसि पूष्णऽआ-
धिपत्यमोज स्पृतन्त्रिणव स्तोमो देवस्य सवितुर्ब्भागोसि बृहस्पतेराधिपत्यꣳ समी-
चीर्द्दिश स्पृताश्चतुष्टोम स्तोमो यवानाम्भागः ॥२५॥
यवानाम्भागोस्ययवानामाधिपत्यम्प्रजा स्पृताश्चतुश्चत्वारिꣳश स्तोमऽऋभूणाम्भा-
गोसि विश्वेषान्देवानामाधिपत्यम्भूतꣳ स्पृतन्त्रयस्त्रिꣳश स्तोमः सहश्च ॥२६॥
सहश्च सहस्यश्च हैमन्तिकावृतूऽअग्ग्नेरन्तःश्लेषोसि कल्पेतान्द्यावापृथिवी कल्प-
न्तामापऽओषधयः कल्पन्तामग्ग्नयः पृथङ्मम ज्यैष्ठ्याय सव्रताः । येऽअग्ग्नयः
समनसोन्तरा द्यावापृथिवीऽइमे । हैमन्तिकावृतूऽअभिकल्पमानाऽइन्द्रमिव देवा
ऽअभिसँविशन्तु तया देवतयाङ्गिरस्वद्ध्रुवे सीदतम् ॥२७॥

॥८॥ एकयास्तुवत प्रजाऽअधीयन्त प्रजापतिरधिपतिरासीत्तिसृभिरस्तुवत ब्रह्मासृज्यत
ब्रह्मणस्पतिरधिपतिरासीत्पञ्चभिरस्तुवत भूतान्यसृज्यन्त भूतानाम्पतिरधिपति-
रासीत्सप्तभिरस्तुवत सप्तऽऋषयोसृज्यन्त धाताधिपतिरासीन्नवभिरस्तुवत ॥२८॥
नवभिरस्तुवत पितरोसृज्यन्तादितिरधिपत्न्यासीदेकादशभिरस्तुवतऽऋतवोसृज्य-
न्तार्त्तवाऽअधिपतयऽआसँस्त्रयोदशभिरस्तुवत मासाऽअसृज्यन्त सँवत्सरोधिपतिरा-
सीत्पञ्चदशभिरस्तुवत क्षत्रमसृज्यतेन्द्रोधिपतिरासीत्सप्तदशभिरस्तुवत ग्राम्म्याः
पशवोसृज्यन्त बृहस्पतिरधिपतिरासीन्नवदशभिरस्तुवत ॥२९॥
नवदशभिरस्तुवत शूद्रार्य्यावसृज्येतामहोरात्रेऽअधिपत्नीऽआस्तामेकविꣳशत्यास्तु-
वतैकशफाः पशवोसृज्यन्त वरुणोधिपतिरासीत्त्रयोविꣳशत्यास्तुवत क्षुद्राः पशवो-
सृज्यन्त पूषाधिपतिरासीत्पञ्चविꣳशत्यास्तुवतारण्याः पशवोसृज्यन्त वायुरधिप-
तिरासीत्सप्तविꣳशत्यास्तुवत द्यावापृथिवी व्यैताँवसवो रुद्राऽआदित्याऽअनुव्या-
यँस्तऽएवाधिपतयऽआसन्नवविꣳशत्यास्तुवत ॥३०॥
नवविꣳशत्यास्तुवत वनस्पतयोसृज्यन्त सोमोधिपतिरासीदेकत्रिꣳशतास्तुवत
प्रजाऽअसृज्यन्त यवाश्चायवाश्चाधिपतयऽआसँस्त्रयस्त्रिꣳशतास्तुवत भूतान्यशा-
म्यन्प्रजापतिः परमेष्ठ्यधिपतिरासील्लोकन्ताऽइन्द्रम् ॥३१॥

गलितमन्त्राः —

लोकम्पृण च्छिद्द्रम्पृणाथो सीद ध्रुवा त्वम् ।
इन्द्राग्ग्नी त्वा बृहस्पतिरस्मिन्न्योनावसीषदन् ॥
ताऽअस्य सूददोहसः सोमꣳ श्रीणन्ति पृश्नयः ।
जन्मन्देवानाँविशस्त्रिष्ष्वा रोचने दिवः ॥
इन्द्रँविश्वाऽअवीवृधन्त्समुद्रव्यचसङ्गिरः ।
रथीतमꣳ रथीनाँवाजानाꣳ सत्पतिम्पतिम् ॥

॥ इति चतुर्दशोऽध्यायः ॥

# अथ पञ्चदशोऽध्यायः

ऋषिः (१) 'अग्ने जातान्' इत्यारभ्य (६५) 'सहस्रस्य प्रमा' इत्यन्तानां सामान्यतः प्रजापतिः साध्याः परमेष्ठी च ऋषयः ।
विशेषतश्च—
(२१) 'अयमग्निः' इत्यस्य विरूपः, (२४) 'अबोध्यग्निः' इत्यस्य बुधगविष्ठिरौ, (२७) 'जनस्य गोपाः' इत्यस्य

सुतम्भरः, (२९) 'सखायः सम्' इत्यस्येषः, (३०) 'सꣳसमिद्युवसे' इत्यस्य संवननः, (३१) 'त्वाश्चित्रश्रवस्तमः' इत्यस्य प्रस्कण्वः, (३२) 'एना वः' इत्यस्य वसिष्ठः, (३५) 'अग्ने वाजस्य' इत्यस्य गोतमः, (३८) 'भद्रो नः' इत्यस्य सौभरिः, (४१) 'अग्निन्तम्' इत्यस्य कुमारवृषौ, (४८) 'अग्ने त्वम्' इत्यादित्रयाणां क्रमेण बन्धुः सुबन्धुः श्रुतबन्धुः, (६२) 'प्रोथदश्वः' इत्यस्य वसिष्ठः ॥

देवता (१) 'अग्ने जातान्' (२) 'सहसा जातान्' इत्यनयोरग्निः ।
(३) 'षोडशी स्तोमः' 'चतुश्चत्वारिꣳशः' इत्यनयोर्लिङ्गोक्ता, 'अग्नेः पुरीषम्' इत्यस्येष्टका ।

(४-५) 'एवश्छन्दः' इत्यादिछन्दोऽन्तानाश्चत्वारिंशन्मन्त्राणाम्, (६) 'रश्मिना सत्याय' 'प्रेतिना धर्मणा' 'अन्वित्या दिवा' 'सन्धिनान्तरिक्षेण' 'प्रतिधिना पृथिव्या' 'विष्टम्भेन वृष्ट्या' 'प्रवयाह्ना' 'अनुया रात्र्या' 'उशिजा वसुभ्यः' 'प्रकेतेनादित्येभ्यः' (७) 'तन्तुना रायस्पोषेण' 'सꣳसर्पेण श्रुताय' 'ऐडेनौषधीभिः' 'उत्तमेन तनूभिः' 'वयोधसाधीतेन' 'अभिजिता तेजसा' (८) 'प्रतिपदसि' 'अनुपदसि' 'सम्पदसि' 'तेजोसि' (९) 'त्रिवृदसि' 'प्रवृदसि' 'विवृदसि' 'सवृदसि' 'आक्रमोसि' 'सङ्क्रमोसि' 'उत्क्रमोसि' 'उत्क्रान्तिरसि' 'अधिपतिनोर्जा' (१०) 'राज्ञ्यसि' (११) 'विराडसि' (१२) 'सम्राडसि' (१३) 'स्वराडसि' (१४) 'अधिपत्न्यसि' (१५) 'अयम्पुरः' (१६) 'अयन्दक्षिणा' (१७) 'अयम्पश्चात्' (१८) 'अयमुत्तरात्' (१९) 'अयमुपरि' इत्येषाञ्च लिङ्गोक्ता ।

(२०) 'अग्निर्मूर्धा दिवः' (२१) 'अयमग्निः' (२२) 'त्वामग्ने' (२३) 'भुवो यज्ञस्य' (२४) 'अबोध्यग्निः' (२५) 'अवोचाम कवये' (२६) 'अयमिह' (२७) 'जनस्य गोपाः' (२८) 'त्वामग्ने' (२९) 'सखायः सम्' (३०) 'सꣳसमिद्युवसे' (३१) 'त्वाश्चित्रश्रवस्तमः' (३२) 'एना वः' (३३) 'विश्वस्य दूतम्' (३४) 'स दुद्रवत्' (३५) 'अग्ने वाजस्य' (३६) 'स इधानः' (३७) 'क्षपो राजन्' (३८) 'भद्रो नः' (३९) 'भद्रा उत' (४०) 'येना समत्सु' (४१) 'अग्निन्तम्' (४२) 'सो अग्निः' (४३) 'उभे सुश्चन्द्र' (४४) 'अग्ने तम्' (४५) 'अधा हि' (४६) 'एभिर्नः' (४७) 'अग्निꣳ होतारम्' (४८) 'अग्ने त्वम्' 'वसुरग्निः' 'तन्त्वा' (४९) 'येन ऋषयः' (५०) 'तम्पत्नीभिः' (५१) 'आ वाचः' (५२) 'अयमग्निः' (५३) 'सम्प्रच्यवध्वम्' (५४) 'उद्बुध्यस्वाग्ने' (५५) 'येन वहसि' (५६) 'अयन्ते' इत्येषामग्निः ।

(५७) 'तपश्च तपस्यश्च' इत्यस्य ऋतवः ।

(५८) 'परमेष्ठी त्वा' इत्यस्य सूर्यः ।

(६२) 'प्रोथदश्वः' इत्यस्याग्निः ।

(६३) 'आयोष्ट्वा' (६४) 'परमेष्ठी त्वा' इत्यनयोः स्वयमातृण्णा ।

(६५) 'सहस्रस्य प्रमा' 'सहस्रस्य प्रतिमा' 'सहस्रस्योन्मा' 'साहस्रोसि 'सहस्राय त्वा' इत्येषामग्निः ॥

छन्दः (१) 'अग्ने जातान्' (२) 'सहसा जातान्' (३) 'अग्नेः पुरीषम्' इत्येषां त्रिष्टुप्, (२०) 'अग्निर्मूर्धा' (२१) 'अयमग्निः' (२२) 'त्वामग्ने' इत्येषां गायत्री, (२३) 'भुवो यज्ञस्य' (२४) 'अबोध्यग्निः' (२५) 'अवोचाम कवये' इत्येषां त्रिष्टुप्, (२६) 'अयमिह' (२७) 'जनस्य गोपाः' (२८) 'त्वामग्ने' इत्येषां जगती, (२९) 'सखायः सम्' (३०) 'सꣳसमिद्युवसे' (३१) 'त्वाश्चित्रश्रवस्तमः' इत्येषामनुष्टुप्, (३२) 'एना वः' (३३) 'विश्वस्य दूतम्' (३४) 'स दुद्रवत्' इत्येषां बार्हतः प्रगाथः, (३५) 'अग्ने वाजस्य' (३६) 'स इधानः' (३७) 'क्षपो राजन्' इत्येषामुष्णिक्, (३८) 'भद्रो नः' (३९) 'भद्रा उत' (४०) 'येना समत्सु' इत्येषां काकुभः प्रगाथः, (४१) 'अग्निन्तम्' (४२) 'सो अग्निः' (४३) 'उभे सुश्चन्द्र' इत्येषां पङ्क्तिः, (४४) 'अग्ने तमद्य' (४२) 'अधा ह्यग्ने' (४६) 'एभिर्नः' इत्येषां पदपङ्क्तिः, (४७) 'अग्निꣳ होतारम्' इत्यस्यातिच्छन्दाः, (४८) 'अग्ने त्वम्' 'वसुरग्निः' 'तन्त्वा' इत्येषां द्विपदा विराट्, (४९) 'येन ऋषयः' इत्यारभ्य (५४) 'उद्बुध्यस्व' इत्यन्तानां त्रिष्टुप्, (५५) 'येन वहसि' (५६) 'अयन्ते' इत्यनयोरनुष्टुप्, (६२) 'प्रोथदश्वः' इत्यस्य त्रिष्टुप् ॥



॥ हरिःॐ ॥

॥१॥ अग्ने जातान्प्रणुदा नः सपत्नान्प्रत्यजातान्नुद जातवेदः ।
अधि नो ब्रूहि सुमनाऽअहेडँस्तव स्याम शर्म्मँस्त्रिवरूथऽउद्भौ ॥१॥
सहसा जातान्प्रणुदा नः सपत्नान्प्रत्यजाताञ्जातवेदो नुदस्व ।
अधि नो ब्रूहि सुमनस्यमानो वयꣳ स्याम प्रणुदा नः सपत्नान् ॥२॥
षोडशी स्तोमऽओजो द्रविणञ्चतुश्चत्वारिꣳश स्तोमो वर्च्चो द्रविणम् । अग्नेः
पुरीषमस्यप्सो नाम तान्त्वा विश्वेऽअभिगृणन्तु देवाः । स्तोमपृष्ठा घृतवतीह
सीद प्रजावदस्मे द्रविणायजस्व ॥३॥
एवश्छन्दो वरिवश्छन्दः शम्भूश्छन्दः परिभूश्छन्दऽआच्छच्छन्दो मनश्छन्दो
व्यचश्छन्दः सिन्धुश्छन्दः समुद्रश्छन्दः सरिरञ्छन्दः ककुप्छन्दस्त्रिक-
कुप्छन्दः काव्यञ्छन्दोऽअङ्कुपञ्छन्दोक्षरपङ्क्तिश्छन्दः पदपङ्क्तिश्छन्दो विष्टार-
पङ्क्तिश्छन्दः क्षुरो भ्रजश्छन्दऽआच्छच्छन्दः प्रच्छच्छन्दः ॥४॥
आच्छच्छन्दः प्रच्छच्छन्दः सँयच्छन्दो वियच्छन्दो बृहच्छन्दो रथन्तरञ्छन्दो
निकायश्छन्दो विवधश्छन्दो गिरश्छन्दो भ्रजश्छन्दः सꣳस्तुप्छन्दोनुष्टु-
प्छन्दऽएवश्छन्दो वरिवश्छन्दो वयश्छन्दो वयस्कृच्छन्दो विष्पर्द्धाश्छन्दो
विशालञ्छन्दश्छदिश्छन्दो दूरोहणञ्छन्दस्तन्द्रञ्छन्दोऽअङ्काङ्कञ्छन्दः ॥५॥
॥२॥ रश्मिना सत्याय सत्यञ्जिन्व प्रेतिना धर्म्मणा धर्म्मञ्जिन्वान्वित्या दिवा दिवञ्जिन्व
सन्धिनान्तरिक्षेणान्तरिक्षञ्जिन्व प्रतिधिना पृथिव्या पृथिवीञ्जिन्व विष्टम्भेन
वृष्ट्या वृष्टिञ्जिन्व प्रवयाह्नाहर्जिन्वानुया रात्र्या रात्रीञ्जिन्वोशिजा वसुभ्यो
वसूञ्जिन्व प्रकेतेनादित्येभ्यऽआदित्याञ्जिन्व तन्तुना रायः ॥६॥
तन्तुना रायस्पोषेण रायस्पोषञ्जिन्व सꣳसर्पेण श्रुताय श्रुतञ्जिन्वैडेनौषधीभि-
रोषधीर्जिन्वोत्तमेन तनूभिस्तनूर्जिन्व वयोधसाधीतेनाधीतञ्जिन्वाभिजिता तेजसा
तेजो जिन्व ॥७॥
प्रतिपदसि प्रतिपदे त्वानुपदस्यनुपदे त्वा सम्पदसि सम्पदे त्वा तेजोसि तेजसे त्वा
त्रिवृदसि ॥८॥
त्रिवृदसि त्रिवृते त्वा प्रवृदसि प्रवृते त्वा विवृदसि विवृते त्वा सवृदसि सवृते त्वाक्र-
मोस्याक्रमाय त्वा सङ्क्रमोसि सङ्क्रमाय त्वोत्क्रमोस्युत्क्रमाय त्वोत्क्रान्तिरस्युत्क्रान्त्यै
त्वाधिपतिनोर्जोर्जञ्जिन्व ॥९॥

॥३॥ राज्ञ्यसि प्प्राची दिग्ग्वसवस्ते देवाऽअधिपतयोग्ग्निर्हेतीनाम्प्रतिधुर्त्ता त्रिवृत्त्वा
स्तोमः पृथिव्याꣳ श्रयत्वाज्ज्यमुक्थमव्यथायै स्तब्भ्नातु रथन्तरꣳ साम प्प्रति-
ष्ठित्त्याऽअन्तरिक्षऽऋषयस्त्वा प्प्रथमजा देवेषु दिवो मात्रया वरिम्म्णा प्प्रथन्तु
विधर्त्ता चायमधिपतिश्च ते त्वा सर्वे सँविदाना नाकस्य पृष्ठे स्वर्ग्गे लोके यजमा-
नञ्च सादयन्तु ॥१०॥

विराडसि दक्षिणा दिग्ग्रुद्द्रास्ते देवाऽअधिपतयऽइन्द्रो हेतीनाम्प्रतिधुर्त्ता पञ्चदश-
स्त्वा स्तोमः पृथिव्याꣳ श्रयतु प्प्रउगमुक्थमव्यथायै स्तब्भ्नातु बृहत्साम प्प्रति-
ष्ठित्त्याऽअन्तरिक्षऽऋषयस्त्वा प्प्रथमजा देवेषु दिवो मात्रया वरिम्म्णा प्प्रथन्तु
विधर्त्ता चायमधिपतिश्च ते त्वा सर्वे सँविदाना नाकस्य पृष्ठे स्वर्ग्गे लोके यजमानञ्च
सादयन्तु ॥११॥

सम्म्राडसि प्प्रतीची दिगादित्यास्ते देवाऽअधिपतयो वरुणो हेतीनाम्प्रतिधुर्त्ता सप्प्त-
दशस्त्वा स्तोमः पृथिव्याꣳ श्रयतु मरुत्वतीयमुक्थमव्यथायै स्तब्भ्नातु वैरूपꣳ
साम प्प्रतिष्ठित्त्याऽअन्तरिक्षऽऋषयस्त्वा प्प्रथमजा देवेषु दिवो मात्रया वरिम्म्णा
प्प्रथन्तु विधर्त्ता चायमधिपतिश्च ते त्वा सर्वे सँविदाना नाकस्य पृष्ठे स्वर्ग्गे लोके
यजमानञ्च सादयन्तु ॥१२॥

स्वराडस्युदीची दिङ्म्मरुतस्ते देवाऽअधिपतयः सोमो हेतीनाम्प्रतिधुर्त्तैकविꣳशस्त्वा
स्तोमः पृथिव्याꣳ श्रयतु निष्केवल्ल्यमुक्थमव्यथायै स्तब्भ्नातु वैराजꣳ साम प्प्र-
तिष्ठित्त्याऽअन्तरिक्षऽऋषयस्त्वा प्प्रथमजा देवेषु दिवो मात्रया वरिम्म्णा प्प्रथन्तु
विधर्त्ता चायमधिपतिश्च ते त्वा सर्वे सँविदाना नाकस्य पृष्ठे स्वर्ग्गे लोके यजमानञ्च
सादयन्तु ॥१३॥

अधिपत्त्न्यसि बृहती दिग्ग्विश्श्वे ते देवाऽअधिपतयो बृहस्प्पतिर्हेतीनाम्प्रतिधुर्त्ता
त्रिणवत्रयस्त्रिꣳशौ त्वा स्तोमौ पृथिव्याꣳ श्रयताँवैश्श्वदेवाग्ग्निमारुतेऽउक्थेऽअव्य-
थायै स्तब्भ्नीताꣳ शाक्वररैवते सामनी प्प्रतिष्ठित्त्याऽअन्तरिक्षऽऋषयस्त्वा प्प्रथ-
मजा देवेषु दिवो मात्रया वरिम्म्णा प्प्रथन्तु विधर्त्ता चायमधिपतिश्च ते त्वा
सर्वे सँविदाना नाकस्य पृष्ठे स्वर्ग्गे लोके यजमानञ्च सादयन्तु ॥१४॥

॥४॥ अयम्पुरो हरिकेशः सूर्य्यरश्मिस्तस्य रथगृत्सश्च रथौजाश्च सेनानीग्ग्रामण्ण्यौ ।
पुञ्जिकस्थला च क्रतुस्थला चाप्प्सरसौ दङ्क्ष्णवः पशवो हेतिः पौरुषेयो वधः
प्प्रहेतिस्तेब्भ्यो नमोऽअस्तु ते नोवन्तु ते नो मृडयन्तु ते यन्द्विष्म्मो यश्च नो द्वेष्टि
तमेषाञ्जम्भे दद्ध्मः ॥१५॥

अयन्दक्षिणा विश्श्वकर्म्मा तस्य रथस्वनश्च रथेचित्रश्च सेनानीग्ग्रामण्ण्यौ । मेनका
च सहजन्न्या चाप्प्सरसौ यातुधाना हेती रक्षाꣳसि प्प्रहेतिस्तेब्भ्यो नमोऽअस्तु
ते नोवन्तु ते नो मृडयन्तु ते यन्द्विष्म्मो यश्च नो द्वेष्टि तमेषाञ्जम्भे दद्ध्मः ॥१६॥

अयम्पश्चाद्विश्श्वव्यचास्तस्य रथप्प्रोतश्चासमरथश्च सेनानीग्ग्रामण्ण्यौ । प्प्रम्म्लो-
चन्ती चानुम्म्लोचन्ती चाप्प्सरसौ व्याग्घ्रा हेतिः सर्प्पाः प्प्रहेतिस्तेब्भ्यो नमोऽ
अस्तु ते नोवन्तु ते नो मृडयन्तु ते यन्द्विष्म्मो यश्च नो द्वेष्टि तमेषाञ्जम्भे
दद्ध्मः ॥१७॥

अयमुत्तरात्सँय्यद्वसुस्तस्य तार्क्ष्यश्चारिष्टनेमिश्च सेनानीग्ग्रामण्ण्यौ । विश्श्वाची
च घृताची चाप्प्सरसावापो हेतिर्वातः प्प्रहेतिस्तेब्भ्यो नमोऽअस्तु ते नोवन्तु ते
नो मृडयन्तु ते यन्द्विष्म्मो यश्च नो द्वेष्टि तमेषाञ्जम्भे दद्ध्मः ॥१८॥

अयमुपर्य्यर्वाग्ग्वसुस्तस्य सेनजिच्च सुषेणश्च सेनानीग्ग्रामण्ण्यौ । उर्वशी च पूर्वचि-
त्तिश्चाप्प्सरसाववस्फूर्ज्जन्हेतिर्विद्युत्प्रहेतिस्तेब्भ्यो नमोऽअस्तु ते नोवन्तु ते नो
मृडयन्तु ते यन्द्विष्म्मो यश्च नो द्वेष्टि तमेषाञ्जम्भे दद्ध्मः ॥१९॥

॥५॥ अग्ग्निर्म्मूर्द्धा दिवः ककुत्पतिः पृथिव्याऽअयम् । अपाꣳ रेताꣳसि जिन्वति ॥२०॥
अयमग्ग्निः सहस्रिणो वाजस्य शतिनस्प्पतिः । मूर्द्धा कवी रयीणाम् ॥२१॥
त्वामग्ग्ने पुष्कराद्ध्यथर्वा निरमन्थत । मूर्द्ध्नो विश्श्वस्य वाघतः ॥२२॥
भुवो यज्ञस्य रजसश्च नेता यत्रा नियुद्भिः सचसे शिवाभिः ।
दिवि मूर्द्धानन्दधिषे स्वर्षाञ्जिह्वामग्ग्ने चकृषे हव्यवाहम् ॥२३॥
अबोध्ध्यग्ग्निः समिधा जनानाम्प्रति धेनुमिवायतीमुषासम् ।
यह्वाऽइव प्प्र वयामुज्जिहानाः प्प्र भानवः सिस्रते नाकमच्छ ॥२४॥
अवोचाम कवये मेद्ध्याय वचो वन्दारु वृषभाय वृष्ण्णे ।
गविष्ठिरो नमसा स्तोममग्ग्नौ दिवीव रुक्ममुरुव्यञ्चमश्श्रेत् ॥२५॥
अयमिह प्प्रथमो धायि धातृभिर्होता यजिष्ठोऽअद्ध्वरेष्ष्वीड्यः ।
यमप्प्नवानो भृगवो विरुरुचुर्वनेषु चित्रँविब्भ्वँविशेविशे ॥२६॥
जनस्य गोपाऽअजनिष्ट जागृविरग्ग्निः सुदक्षः सुविताय नव्यसे ।
घृतप्प्रतीको बृहता दिविस्पृशा द्युमद्विभाति भरतेब्भ्यः शुचिः ॥२७॥

त्वामग्ग्नेऽअङ्गिरसो गुहा हितमन्न्वविन्दञ्छिश्श्रियाणँवनेवने ।
स जायसे मथ्यमानः सहो महत्त्वामाहुः सहसस्प्पुत्रमङ्गिरः ॥२८॥
सखायः सँवः सम्म्यञ्चमिषँ स्तोमञ्चाग्ग्नये ।
वर्षिष्ठाय क्षितीनामूर्ज्जो नप्त्रे सहस्वते ॥२९॥
सँसमिद्युवसे वृषन्नग्ग्ने विश्श्वान्न्यर्य्यऽआ ।
इडस्प्पदे समिद्ध्यसे स नो वसून्न्याभर ॥३०॥
त्वाञ्चित्रश्श्रवस्तम हवन्ते विक्षु जन्तवः ।
शोचिष्केशम्पुरुप्प्रियाग्ग्ने हव्याय वोढवे ॥३१॥
एना वोऽअग्ग्निन्नमसोर्ज्जो नपातमाहुवे ।
प्प्रियञ्चेतिष्ठमरतिँ स्वद्ध्वरँविश्श्वस्य दूतममृतम् ॥३२॥
विश्श्वस्य दूतममृतँविश्श्वस्य दूतममृतम् ।
स योजतेऽअरुषा विश्श्वभोजसा स दुद्रवत्स्वाहुतः ॥३३॥
स दुद्रवत्स्वाहुतः स दुद्रवत्स्वाहुतः ।
सुब्ब्रह्मा यज्ञः सुशमी वसूनान्देवँ राधो जनानाम् ॥३४॥
अग्ग्ने वाजस्य गोमतऽईशानः सहसो यहो । अस्म्मे धेहि जातवेदो महि श्श्रवः॥३५॥
सऽइधानो वसुष्क्कविरग्ग्निरीडेन्न्यो गिरा । रेवदस्म्मब्भ्यम्पुर्व्वणीक दीदिहि ॥३६॥
क्षपो राजन्नुत त्त्मनाग्ग्ने वस्तोरुतोषसः । स तिग्ग्मजम्भ रक्क्षसो दह प्प्रति ॥३७॥
भद्द्रो नोऽअग्ग्निराहुतो भद्द्रा रातिः सुभग भद्द्रोऽअद्ध्वरः । भद्द्राऽउत प्प्रशस्त्तयः ॥३८॥
भद्द्राऽउत प्प्रशस्त्तयो भद्द्रम्मनः कृणुष्ष्व वृत्रतूर्य्ये । येना समत्त्सु सासहः ॥३९॥
येना समत्त्सु सासहोव स्त्थिरा तनुहि भूरि शर्द्धताम् । वनेमा तेऽअभिष्टिभिः ॥४०॥
अग्ग्निन्तम्मन्न्ये यो वसुरस्त्तँय्यँय्यन्ति धेनवः ।
अस्त्तमर्व्वन्तऽआशवोस्त्तन्नित्त्यासो वाजिनऽइषँ स्तोतृब्भ्यऽआभर ॥४१॥
सोऽअग्ग्निर्य्यो वसुर्गृणे सँय्यमायन्ति धेनवः ।
समर्व्वन्तो रघुद्द्रुवः सँ सुजातासः सूरयऽइषँ स्तोतृब्भ्यऽआभर ॥४२॥
उभे सुश्चन्द्र सर्प्पिषो दर्व्वी श्श्रीणीषऽआसनि ।
उतो नऽउत्त्पुपूर्य्याऽउक्क्थेषु शवसस्प्पतऽइषँ स्तोतृब्भ्यऽआभर ॥४३॥
अग्ग्ने तमद्याश्श्वन्न स्त्तोमैः क्क्रतुन्न भद्द्रँ हृदिस्पृशम् । ऋद्ध्यामा तऽओहैः ॥४४॥
अधा ह्ह्यग्ग्ने क्क्रतोर्ब्भद्द्रस्य दक्क्षस्य साधोः । रथीर्ऋतस्य बृहतो बभूथ ॥४५॥
एभिर्न्नोऽअर्क्कैर्ब्भवा नोऽअर्व्वाङ्क्स्वर्ण्ण ज्ज्योतिः ।
अग्ग्ने विश्श्वेभिः सुमनाऽअनीकैः ॥४६॥
अग्ग्निँ होतारम्मन्न्ये दास्वन्तँवसुँ सूनुँ सहसो जातवेदसँविप्प्रन्न जातवेदसम् ।
यऽऊर्द्ध्वया स्वद्ध्वरो देवो देवाच्च्या कृपा । घृतस्य विब्भ्राष्ट्टिमनुवष्ट्टि शोचिषा-
जुह्वानस्य सर्प्पिषः ॥४७॥
अग्ग्ने त्त्वन्नोऽअन्तमऽउत त्त्राता शिवो भवा वरूत्थ्यः । वसुरग्ग्निर्व्वसुश्श्रवाऽअच्छा
नक्क्षि द्युमत्तमँ रयिन्दाः । तन्त्वा शोचिष्ठ दीदिवः सुम्न्नाय नूनमीमहे
सखिब्भ्यः ॥४८॥

॥६॥ येनऽऋषयस्त्तपसा सत्रमायन्निन्धानाऽअग्ग्निँ स्वराभरन्तः ।
तस्मिन्नहन्निदधे नाकेऽअग्ग्निँय्यमाहुर्म्मनव स्त्तीर्ण्णबर्हिषम् ॥४९॥
तम्पत्क्नीभिरनुगच्छेम देवाः पुत्रैर्ब्भ्रातृभिरुत वा हिरण्ण्यैः ।
नाकङ्गृब्भ्णानाः सुकृतस्य लोके तृतीये पृष्ठेऽअधि रोचने दिवः ॥५०॥
आ वाचो मद्ध्यमरुहद्भुरण्ण्युरयमग्ग्निः सत्त्पतिश्चेकितानः ।
पृष्ठे पृथिव्या निहितो दविद्युतदधस्प्पदङ्कृणुताँय्ये पृतन्न्यवः ॥५१॥
अयमग्ग्निर्व्वीरतमो वयोधाः सहस्त्रियो द्योततामप्प्रयुच्छन् ।
विब्भ्राजमानः सरिरस्य मद्ध्यऽउपप्प्रयाहि दिव्यानि धाम ॥५२॥
सम्प्रच्च्यवद्ध्वमुप सम्प्रयाताग्ग्ने पथो देवयानान्कृणुद्ध्वम् ।
पुनः कृण्ण्वाना पितरा युवानान्न्वाताँसीत्त्वयि तन्तुमेतम् ॥५३॥
उद्बुद्ध्यस्वाग्ग्ने प्प्रतिजागृहि त्त्वमिष्टापूर्त्ते सँसृजेथामयञ्च ।
अस्म्मिन्त्सधस्त्थेऽअद्ध्युत्तरस्म्मिन्विश्श्वे देवा यजमानश्च सीदत ॥५४॥
येन वहसि सहस्त्रँय्येनाग्ग्ने सर्व्ववेदसम् । तेनेमँय्यज्ज्ञन्नो नय स्वर्द्देवेषु गन्तवे ॥५५॥
अयन्ते योनिर्ऋत्त्वियो यतो जातोऽअरोचथाः ।
तञ्जानन्नग्ग्नऽआरोहाथा नो वर्द्धया रयिम् ॥५६॥

॥७॥ तपश्च तपस्यश्च शैशिरावृतूऽअग्ग्नेरन्तःश्श्लेषोसि कल्प्पेतान्द्यावापृथिवी कल्प्पन्तामा-
पऽओषधयः कल्प्पन्तामग्ग्नयः पृथङ्मम ज्ज्यैष्ठ्याय सव्व्रताः । येऽअग्ग्नयः सम-
नसोन्तरा द्यावापृथिवीऽइमे । शैशिरावृतूऽअभिकल्प्पमानाऽइन्द्रमिव देवाऽअभिसँ-
विशन्तु तया देवतयाङ्गिरस्वद्ध्रुवे सीदतम् ॥५७॥

परमेष्ठी त्वा सादयतु दिवस्पृष्ठे ज्योतिष्मतीम्। विश्वस्मै प्राणायापानाय व्या-
नाय विश्वञ्ज्योतिर्य्यच्छ । सूर्य्यस्तेधिपतिस्तया देवतयाङ्गिरस्वद्ध्रुवा सीद ॥५८॥
लोकम्पृण च्छिद्रम्पृणाथो सीद ध्रुवा त्वम् ।
इन्द्राग्नी त्वा बृहस्पतिरस्मिन्योनावसीषदन् ॥५९॥
ताऽअस्य सूददोहसः सोमꣳ श्रीणन्ति पृश्नयः ।
जन्मन्देवानाँविशस्त्रिष्वा रोचने दिवः ॥६०॥
इन्द्रँविश्वाऽअवीवृधन्त्समुद्रव्यचसङ्गिरः ।
रथीतमꣳ रथीनाँवाजानाꣳ सत्पतिम्पतिम् ॥६१॥
प्रोथदश्वो न यवसेविष्ष्यन्यदा महः सँवरणाद्व्यस्थात् ।
आदस्य वातोऽअनुवाति शोचिरध स्म ते व्रजनङ्कृष्णमस्ति ॥६२॥
आयोष्ट्वा सदने सादयाम्यवतश्च्छायायाꣳ समुद्रस्य हृदये ।
रश्मीवतीम्भास्वतीमा या द्याम्भास्या पृथिवीमोर्वन्तरिक्षम् ॥६३॥
परमेष्ठी त्वा सादयतु दिवस्पृष्ठे व्यचस्वतीम्प्रथस्वतीन्दिवँय्यच्छ दिवन्दꣳह दिव-
म्मा हिꣳसीः । विश्वस्मै प्राणायापानाय व्यानायोदानाय प्रतिष्ठायै चरित्राय ।
सूर्य्यस्त्वाभिपातु मह्या स्वस्त्या च्छर्दिषा शन्तमेन तया देवतयाङ्गिरस्वद्ध्रुवे
सीदतम् ॥६४॥
सहस्रस्य प्रमासि सहस्रस्य प्रतिमासि सहस्रस्योन्मासि साहस्रोसि सहस्राय
त्वा ॥६५॥

॥ इति पञ्चदशोऽध्यायः ॥

---

# अथ षोडशोऽध्यायः

ऋषिः (१) 'नमस्ते रुद्र' इत्यारभ्य (६६) 'नमोस्तु रुद्रेभ्यः' इत्यन्तानां सामान्यतः परमेष्ठी देवाः प्रजापतिर्वा ऋषयः ।
विशेषतश्च—
(१५) 'मा नो महान्तम्' (१६) 'मा नस्तोके' (४८) 'इमा रुद्राय' इत्येषां कुत्सः ॥

देवता (१) 'नमस्ते रुद्र' (२) 'या ते' (३) 'यामिषुम्' (४) 'शिवेन वचसा' (५) 'अध्यवोचत्' (६) 'असौ यस्ताम्रः' (७) 'असौ योवसर्पति' (८) 'नमोस्तु नीलग्रीवाय' (९) 'प्रमुञ्च धन्वनः' (१०) 'विज्यन्धनुः' (११) 'या ते' (१२) 'परि ते' (१३) 'अवतत्य धनुः' (१४) 'नमस्त आयुधाय' (१५) 'मा नो महान्तम्' (१६) 'मा नस्तोके' इत्येषामेको रुद्रः ।
(१७) 'नमो हिरण्यबाहवे' (१८) 'नमो बभ्लुशाय' (१९) 'नमो रोहिताय' (२०) 'नमः कृत्स्नायतया' (२१) 'नमो वञ्चते' (२२) 'नम उष्णीषिणे' (२३) 'नमो विसृजद्भ्यः' (२४) 'नमः सभाभ्यः' (२५) 'नमो गणेभ्यः' (२६) 'नमः सेनाभ्यः' (२७) 'नमस्तक्षभ्यः' (२८) 'नमः श्वभ्यः' (२९) 'नमः कपर्दिने' (३०) 'नमो ह्रस्वाय' (३१) 'नम आशवे' (३२) 'नमो ज्येष्ठाय' (३३) 'नमः सोभ्याय' (३४) 'नमो वन्याय' (३५) 'नमो बिल्मिने' (३६) 'नमो धृष्णवे' (३७) 'नमः स्रुत्याय' (३८) 'नमः कूप्याय' (३९) 'नमो वात्याय' (४०) 'नमः शृङ्गवे' (४१) 'नमः शम्भवाय' (४२) 'नमः पार्याय' (४३) 'नमः सिकत्याय' (४४) 'नमो व्रज्याय' (४५) 'नमः शुष्क्याय' (४६) 'नमः पर्णाय' इत्येषां तिस्रोऽशीतयो रुद्राः, 'नमो वः किरिकेभ्यः' 'नमो विचिन्वत्केभ्यः' 'नमो विक्षिणत्केभ्यः' 'नम आनिर्हतेभ्यः' इत्येषामग्निवायुसूर्या बहवो रुद्राश्च ।
(४७) 'द्रापे अन्धसस्पते' (४८) 'इमा रुद्राय' (४९) 'या ते' (५०) 'परि नः' (५१) 'मीढुष्टम शिवतम' (५२) 'विकिरिद्र विलोहित' (५३) 'सहस्राणि सहस्रशः' इत्येषामेको रुद्रः ।
(५४) 'असङ्ख्याता सहस्राणि' (५५) 'अस्मिन् महति' (५६) 'नीलग्रीवाः शितिकण्ठा दिवम्' (५७) 'नीलग्रीवाः शितिकण्ठाः शर्वाः' (५७) 'ये वृक्षेषु' (५९) 'ये भूतानाम्' (६०) 'ये पथाम्' (६१) 'ये तीर्थानि' (६२) 'येन्नेषु' (६३) 'य एतावन्तः' (६४) 'नमोस्तु रुद्रेभ्यो ये दिवि' (६५) 'नमोस्तु रुद्रेभ्यो येन्तरिक्षे' (६६) 'नमोस्तु रुद्रेभ्यो ये पृथिव्याम्' इत्येषां बहवो रुद्राः ।

छन्दः (१) 'नमस्ते रुद्र' इत्यस्य गायत्री, (२) 'या ते' (३) 'यामिषुम्' (४) 'शिवेन वचसा' इत्येषामनुष्टुप्, (५) 'अध्यवोचत्' (६) 'असौ यस्ताम्रः' (७) 'असौ योवसर्पति' इत्येषां पङ्क्तिः, (८) 'नमोस्तु नीलग्रीवाय' इत्यारभ्य (१४) 'नमस्त आयुधाय' इत्यन्तानामनुष्टुप्, (१५) 'मा नो महान्तम्' (१६) 'मा नस्तोके' इत्यनयोर्जगती, (४७) 'द्रापे अन्धसस्पते' इत्यस्योपरिष्टाद्बृहती, (४८) 'इमा रुद्राय' इत्यस्य जगती, (४९) 'या ते' इत्यस्यानुष्टुप्, (५०) 'परि नः' (५१) 'मीढुष्टम शिवतम' इत्यनयोस्त्रिष्टुप्, (५२) 'विकिरिद्र विलोहित' (५३) (५३) 'सहस्राणि सहस्रशः' इत्यनयोरनुष्टुप्, (५४) 'असङ्ख्याता सहस्राणि' इत्यारभ्य (६३) 'य एतावन्तः' इत्यन्तानामनुष्टुप् ॥

॥ हरिःॐ ॥

॥१॥ नमस्ते रुद्र मन्यवऽउतो तऽइषवे नमः । बाहुभ्यामुत ते नमः ॥१॥
या ते रुद्र शिवा तनूरघोरापापकाशिनी ।
तया नस्तन्वा शन्तमया गिरिशन्ताभिचाकशीहि ॥२॥
यामिषुङ्गिरिशन्त हस्ते बिभर्ष्यस्तवे ।
शिवाङ्गिरित्र ताङ्कुरु मा हिꣳसीः पुरुषञ्जगत् ॥३॥
शिवेन वचसा त्वा गिरिशाच्छा वदामसि ।
यथा नः सर्वमिज्जगदयक्ष्मꣳ सुमनाऽअसत् ॥४॥
अध्यवोचदधिवक्ता प्रथमो दैव्यो भिषक् ।
अहीꣳश्च सर्वाञ्जम्भयन्त्सर्वाश्च यातुधान्न्योधराचीः परासुव ॥५॥
असौ यस्ताम्रोऽअरुणऽउत बभ्रुः सुमङ्गलः ।
ये चैनꣳ रुद्राऽअभितो दिक्षु श्रिताः सहस्रशोवैषाꣳ हेडऽईमहे ॥६॥
असौ योवसर्प्पति नीलग्रीवो विलोहितः ।
उतैनङ्गोपाऽअदृश्रन्नदृश्रन्नुदहार्य्यः स दृष्टो मृडयाति नः ॥७॥

नमोऽस्तु नीलग्रीवाय सहस्राक्षाय मीढुषे ।
अथो येऽअस्य सत्त्वानोहन्तेभ्योकरन्नमः ॥८॥
प्रमुञ्च धन्वनस्त्वमुभयोरार्त्न्योर्ज्याम् । याश्च ते हस्तऽइषवः परा ता भगवो वप ॥९॥
विज्यन्धनुः कपर्दिनो विशल्यो बाणवाँ२ऽउत ।
अनेशन्नस्य याऽइषवऽआभुरस्य निषङ्गधिः ॥१०॥
या ते हेतिर्मीढुष्टम हस्ते बभूव ते धनुः ।
तयास्मान्विश्वतस्त्वमयक्ष्मया परिभुज ॥११॥
परि ते धन्वनो हेतिरस्मान्वृणक्तु विश्वतः ।
अथो यऽइषुधिस्तवारेऽअस्मन्निधेहि तम् ॥१२॥
अवतत्य धनुष्ट्वꣳ सहस्राक्ष शतेषुधे ।
निशीर्य्य शल्यानाम्मुखा शिवो नः सुमना भव ॥१३॥
नमस्तऽआयुधायानातताय धृष्णवे ।
उभाभ्यामुत ते नमो बाहुभ्यान्तव धन्वने ॥१४॥
मा नो महान्तमुत मा नोऽअर्भकम्मा नऽउक्षन्तमुत मा नऽउक्षितम् ।
मा नो वधीः पितरम्मोत मातरम्मा नः प्रियास्तन्वो रुद्र रीरिषः ॥१५॥
मा नस्तोके तनये मा नऽआयुषि मा नो गोषु मा नोऽअश्वेषु रीरिषः ।
मा नो वीरान्रुद्र भामिनो वधीर्हविष्मन्तः सदमित्त्वा हवामहे ॥१६॥

॥२॥ नमो हिरण्यबाहवे सेनान्ये दिशाञ्च पतये नमो नमो वृक्षेभ्यो हरिकेशेभ्यः पशू-
नाम्पतये नमो नमः शष्पिञ्जराय त्विषीमते पथीनाम्पतये नमो नमो हरिकेशा-
योपवीतिने पुष्टानाम्पतये नमो नमो बभ्लुशाय ॥१७॥
नमो बभ्लुशाय व्याधिनेन्नानाम्पतये नमो नमो भवस्य हेत्यै जगताम्पतये नमो
नमो रुद्रायाततायिने क्षेत्राणाम्पतये नमो नमः सूतायाहन्त्यै वनानाम्पतये नमो
नमो रोहिताय ॥१८॥
नमो रोहिताय स्थपतये वृक्षाणाम्पतये नमो नमो भुवन्तये वारिवस्कृतायौषधी-
नाम्पतये नमो नमो मन्त्रिणे वाणिजाय कक्षाणाम्पतये नमो नमऽउच्चैर्घोषाया-
क्रन्दयते पत्तीनाम्पतये नमो नमः कृत्स्नायतया ॥१९॥
नमः कृत्स्नायतया धावते सत्त्वनाम्पतये नमो नमः सहमानाय निव्याधिनऽआव्या-
धिनीनाम्पतये नमो नमो निषङ्गिणे ककुभाय स्तेनानाम्पतये नमो नमो निचेरवे
परिचरायारण्यानाम्पतये नमो नमो वञ्चते ॥२०॥
नमो वञ्चते परिवञ्चते स्तायूनाम्पतये नमो नमो निषङ्गिणऽइषुधिमते तस्कराणा-
म्पतये नमो नमः सृकायिभ्यो जिघांꣳसद्भ्यो मुष्णताम्पतये नमो नमोसिम-
द्भ्यो नक्तञ्चरद्भ्यो विकृन्तानाम्पतये नमः ॥२१॥
॥३॥ नमऽउष्णीषिणे गिरिचराय कुलुञ्चानाम्पतये नमो नमऽइषुमद्भ्यो धन्वायिभ्यश्च
वो नमो नमऽआतन्वानेभ्यः प्रतिदधानेभ्यश्च वो नमो नमऽआयच्छद्भ्योस्य-
द्भ्यश्च वो नमो नमो विसृजद्भ्यः ॥२२॥
नमो विसृजद्भ्यो विध्यद्भ्यश्च वो नमो नमः स्वपद्भ्यो जाग्रद्भ्यश्च वो नमो
नमः शयानेभ्यऽआसीनेभ्यश्च वो नमो नमस्तिष्ठद्भ्यो धावद्भ्यश्च वो नमो
नमः सभाभ्यः ॥२३॥
नमः सभाभ्यः सभापतिभ्यश्च वो नमो नमोश्वेभ्योश्वपतिभ्यश्च वो नमो नमऽ
आव्याधिनीभ्यो विविध्यन्तीभ्यश्च वो नमो नमऽउगणाभ्यस्तृꣳहतीभ्यश्च वो नमो
नमो गणेभ्यः ॥२४॥
नमो गणेभ्यो गणपतिभ्यश्च वो नमो नमो व्रातेभ्यो व्रातपतिभ्यश्च वो नमो नमो
गृत्सेभ्यो गृत्सपतिभ्यश्च वो नमो नमो विरूपेभ्यो विश्वरूपेभ्यश्च वो नमो
नमः सेनाभ्यः ॥२५॥
नमः सेनाभ्यः सेनानिभ्यश्च वो नमो नमो रथिभ्योऽअरथेभ्यश्च वो नमो नमः
क्षत्तृभ्यः सङ्ग्रहीतृभ्यश्च वो नमो नमो महद्भ्योऽअर्भकेभ्यश्च वो नमः ॥२६॥
॥४॥ नमस्तक्षभ्यो रथकारेभ्यश्च वो नमो नमः कुलालेभ्यः कर्म्मारेभ्यश्च वो नमो
नमो निषादेभ्यः पुञ्जिष्ठेभ्यश्च वो नमो नमः श्वनिभ्यो मृगयुभ्यश्च वो नमो
नमः श्वभ्यः ॥२७॥
नमः श्वभ्यः श्वपतिभ्यश्च वो नमो नमो भवाय च रुद्राय च नमः शर्वाय
च पशुपतये च नमो नीलग्रीवाय च शितिकण्ठाय च नमः कपर्दिने ॥२८॥
नमः कपर्दिने च व्युप्तकेशाय च नमः सहस्राक्षाय च शतधन्वने च नमो
गिरिशयाय च शिपिविष्टाय च नमो मीढुष्टमाय चेषुमते च नमो ह्रस्वाय ॥२९॥
नमो ह्रस्वाय च वामनाय च नमो बृहते च वर्षीयसे च नमो वृद्धाय च सवृधे च
नमोग्र्याय च प्रथमाय च नमऽआशवे ॥३०॥

नमऽआशवे चाजिराय च नमः शीघ्र्याय च शीभ्याय च नमऽऊर्म्याय चाव-
स्वन्याय च नमो नादेयाय च द्वीप्याय च ॥३१॥

॥५॥ नमो ज्येष्ठाय च कनिष्ठाय च नमः पूर्वजाय चापरजाय च नमो मध्यमाय चाप-
गल्भाय च नमो जघन्याय च बुध्न्याय च नमः सोभ्याय ॥३२॥

नमः सोभ्याय च प्रतिसर्याय च नमो याम्याय च क्षेम्याय च नमः
श्लोक्याय चावसान्याय च नमऽउर्वर्याय च खल्याय च नमो वन्याय ॥३३॥

नमो वन्याय च कक्ष्याय च नमः श्रवाय च प्रतिश्रवाय च नमऽआशुषेणाय
चाशुरथाय च नमः शूराय चावभेदिने च नमो बिल्मिने ॥३४॥

नमो बिल्मिने च कवचिने च नमो वर्मिणे च वरूथिने च नमः श्रुताय च
श्रुतसेनाय च नमो दुन्दुभ्याय चाहनन्याय च नमो धृष्णवे ॥३५॥

नमो धृष्णवे च प्रमृशाय च नमो निषङ्गिणे चेषुधिमते च नमस्तीक्ष्णेषवे
चायुधिने च नमः स्वायुधाय च सुधन्वने च ॥३६॥

॥६॥ नमः स्रुत्याय च पथ्याय च नमः काट्याय च नीप्याय च नमः कुल्याय च
सरस्याय च नमो नादेयाय च वैशन्ताय च नमः कूप्याय ॥३७॥

नमः कूप्याय चावट्याय च नमो वीध्र्याय चातप्याय च नमो मेघ्याय च
विद्युत्याय च नमो वर्ष्याय चावर्ष्याय च नमो वात्याय ॥३८॥

नमो वात्याय च रेष्म्याय च नमो वास्तव्याय च वास्तुपाय च नमः सोमाय च
रुद्राय च नमस्ताम्राय चारुणाय च नमः शङ्गवे ॥३९॥

नमः शङ्गवे च पशुपतये च नमऽउग्राय च भीमाय च नमोऽग्रेवधाय च दूरेव-
धाय च नमो हन्त्रे च हनीयसे च नमो वृक्षेभ्यो हरिकेशेभ्यो नमस्ताराय ॥४०॥

॥७॥ नमः शम्भवाय च मयोभवाय च नमः शङ्कराय च मयस्कराय च नमः शिवाय
च शिवतराय च ॥४१॥

॥८॥ नमः पार्याय चावार्याय च नमः प्रतरणाय चोत्तरणाय च नमस्तीर्थ्याय च
कूल्याय च नमः शष्प्याय च फेन्याय च नमः सिकत्याय ॥४२॥

नमः सिकत्याय च प्रवाह्याय च नमः किᳬशिलाय च क्षयणाय च नमः कपर्दिने
च पुलस्तये च नमऽइरिण्याय च प्रपथ्याय च नमो व्रज्याय ॥४३॥

नमो व्रज्याय च गोष्ठ्याय च नमस्तल्प्याय च गेह्याय च नमो हृदय्याय च
निवेष्प्याय च नमः काट्याय च गह्वरेष्ठाय च नमः शुष्क्याय ॥४४॥

नमः शुष्क्याय च हरित्याय च नमः पाᳬसव्याय च रजस्याय च नमो
लोप्याय चोलप्याय च नमऽऊर्व्याय च सूर्व्याय च नमः पर्णाय ॥४५॥

नमः पर्णाय च पर्णशदाय च नमऽउद्गुरमाणाय चाभिघ्नते च नमऽआखिदते
च प्रखिदते च नमऽइषुकृद्भ्यो धनुष्कृद्भ्यश्च वो नमो नमो वः किरिकेभ्यो
देवानाᳬ हृदयेभ्यो नमो विचिन्वत्केभ्यो नमो विक्षिणत्केभ्यो नमऽआनिर्ह-
तेभ्यः ॥४६॥

॥९॥ द्रापेऽअन्धसस्पते दरिद्र नीललोहित ।
आसाम्प्रजानामेषाम्पशूनाम्मा भेर्म्मा रोङ्मो च नः किञ्चनाममत् ॥४७॥
इमा रुद्राय तवसे कपर्दिने क्षयद्वीराय प्रभरामहे मतीः ।
यथा शमसद्द्विपदे चतुष्पदे विश्वम्पुष्टङ्ग्रामेऽअस्मिन्ननातुरम् ॥४८॥
या ते रुद्र शिवा तनूः शिवा विश्वाहा भेषजी ।
शिवा रुतस्य भेषजी तया नो मृड जीवसे ॥४९॥
परि नो रुद्रस्य हेतिर्वृणक्तु परि त्वेषस्य दुर्म्मतिरघायोः ।
अव स्थिरा मघवद्भ्यस्तनुष्व मीढ्वस्तोकाय तनयाय मृड ॥५०॥
मीढुष्टम शिवतम शिवो नः सुमना भव ।
परमे वृक्षऽआयुधन्निधाय कृत्तिंवसानऽआचर पिनाकम्बिभ्रदागहि ॥५१॥
विकिरिद्र विलोहित नमस्तेऽअस्तु भगवः ।
यास्ते सहस्रᳬ हेतयोन्यमस्मन्निवपन्तु ताः ॥५२॥
सहस्राणि सहस्रशो बाह्वोस्तव हेतयः ।
तासामीशानो भगवः पराचीना मुखा कृधि ॥५३॥
असङ्ख्याता सहस्राणि ये रुद्राऽअधि भूम्याम् ।
तेषाᳬ सहस्रयोजनेव धन्वानि तन्मसि ॥५४॥
अस्मिन्महत्यर्णवेन्तरिक्षे भवाऽअधि ।
तेषाᳬ सहस्रयोजनेव धन्वानि तन्मसि ॥५५॥
नीलग्रीवाः शितिकण्ठा दिवᳬ रुद्राऽउपश्रिताः ।
तेषाᳬ सहस्रयोजनेव धन्वानि तन्मसि ॥५६॥
नीलग्रीवाः शितिकण्ठाः शर्वाऽअधः क्षमाचराः ।
तेषाᳬ सहस्रयोजनेव धन्वानि तन्मसि ॥५७॥

ये वृक्षेषु शष्पिञ्जरा नीलग्रीवा विलोहिताः ।
तेषाꣳ सहस्रयोजनेव धन्वानि तन्मसि ॥५८॥
ये भूतानामधिपतयो विशिखासः कपर्दिनः ।
तेषाꣳ सहस्रयोजनेव धन्वानि तन्मसि ॥५९॥
ये पथाम्पथिरक्षयऽऐलबृदाऽआयुर्युधः ।
तेषाꣳ सहस्रयोजनेव धन्वानि तन्मसि ॥६०॥
ये तीर्थानि प्रचरन्ति सृकाहस्ता निषङ्गिणः ।
तेषाꣳ सहस्रयोजनेव धन्वानि तन्मसि ॥६१॥
येन्नेषु विविध्यन्ति पात्रेषु पिबतो जनान् ।
तेषाꣳ सहस्रयोजनेव धन्वानि तन्मसि ॥६२॥
यऽएतावन्तश्च भूयाꣳसश्च दिशो रुद्रा वितस्थिरे ।
तेषाꣳ सहस्रयोजनेव धन्वानि तन्मसि ॥६३॥
नमोस्तु रुद्रेभ्यो ये दिवि येषाँवर्षमिषवः । तेभ्यो दश प्राचीर्दश दक्षिणा दश प्रतीचीर्दशोदीचीर्दशोर्ध्वाः । तेभ्यो नमोऽअस्तु ते नोवन्तु ते नो मृडयन्तु ते यन्द्विष्मो यश्च नो द्वेष्टि तमेषाञ्जम्भे दध्मः ॥६४॥
नमोस्तु रुद्रेभ्यो येन्तरिक्षे येषाँवातऽइषवः । तेभ्यो दश प्राचीर्दश दक्षिणा दश प्रतीचीर्दशोदीचीर्दशोर्ध्वाः । तेभ्यो नमोऽअस्तु ते नोवन्तु ते नो मृडयन्तु ते यन्द्विष्मो यश्च नो द्वेष्टि तमेषाञ्जम्भे दध्मः ॥६५॥
नमोस्तु रुद्रेभ्यो ये पृथिव्याँयेषामन्नमिषवः । तेभ्यो दश प्राचीर्दश दक्षिणा दश प्रतीचीर्दशोदीचीर्दशोर्ध्वाः । तेभ्यो नमोऽअस्तु ते नोवन्तु ते नो मृडयन्तु ते यन्द्विष्मो यश्च नो द्वेष्टि तमेषाञ्जम्भे दध्मः ॥६६॥

॥ इति षोडशोऽध्यायः ॥

---

# अथ सप्तदशोऽध्यायः

**ऋषिः** (१) 'अश्मन्नूर्जम्' इत्यारभ्य (९९) 'धामन्ते' इत्यन्तानां सामान्यतः प्रजापतिः साध्या वा ऋषयः । विशेषतश्च— (८) 'अग्ने पावक' इत्यस्य वसूयवः, (९) 'स नः पावक' इत्यस्य मेधातिथिः, (१०) 'पावकया यः' इत्यस्य भरद्वाजः, (११) 'नमस्ते हरसे' इत्यस्य ऋषिसुता लोपामुद्रा, (१६) 'अग्निस्तिग्मेन' इत्यस्य भरद्वाजः, (१७) 'य इमाः' इत्यारभ्य (३२) 'विश्वकर्मा हि' इत्यन्तानां भौवनो विश्वकर्मा, (३३) 'आशुः शिशानः' इत्यारभ्य (४४) 'अमीषाञ्चित्तम्' इत्यन्तानामप्रतिरथः, (५३) 'उदु त्वा' इत्यस्य तापसः, (५९) 'विमान एषः' इत्यस्य विश्वावसुः, (६०) 'उक्षा समुद्रः' इत्यस्याप्रतिरथः, (६१) 'इन्द्रं विश्वाः' इत्यस्य माधुच्छन्दसो जेता, (६२) 'देवहूर्यज्ञः' इत्यस्य विधृतिः, (७०) 'नक्तोषासा समनसा' इत्यस्य कुत्सः, (७४) 'ताꣳ सवितुः' इत्यस्य कण्वः, (७५) 'विधेम ते' इत्यस्य गृत्समदः, (७६) 'प्रेद्धो अग्ने' इत्यस्य वसिष्ठः, (७९) 'सप्त ते' इत्यस्य सप्तर्षयः, (८८) 'घृतम्मिमिक्षे' इत्यस्य गृत्समदः, (८९) 'समुद्रादूर्मिः' इत्यस्य वामदेवः ॥

**देवता** (१) 'अश्मन्नूर्जम्' इत्यस्य मरुतः, 'अश्मँस्ते' इत्यस्याश्मा, 'मयि ते' इत्यस्याशीः, 'यन्द्विष्मः' इत्यस्य शुक् ।
(२) 'इमा मे' (३) 'ऋतव स्थ' (४) 'समुद्रस्य त्वा' (५) 'हिमस्य त्वा' (६) 'उपज्मन्नुप' (७) 'अपामिदम्' (८) 'अग्ने पावक' (९) 'स नः पावक' (१०) 'पावकया यः' (११) 'नमस्ते हरसे' (१२) 'नृषदे वेट्' 'अप्सुषदे वेट्' 'बर्हिषदे वेट्' 'वनसदे वेट्' 'स्वर्विदे वेट्' इत्येषामग्निः ।
(१३) 'ये देवा देवानाम्' (१४) 'ये देवा देवेषु' इत्यनयोः प्राणः ।
(१५) 'प्राणदा अपानदाः' (१६) 'अग्निस्तिग्मेन' इत्यनयोरग्निः ।
(१७) 'य इमा' (१८) 'किꣳ स्विदासीत्' (१९) 'विश्वतश्चक्षुः' (२०) 'किꣳ स्विद्वनम्' (२१) 'या ते' (२२) 'विश्वकर्मन्हविषा' (२३) 'वाचस्पतिं विश्वकर्माणम्' (२४) 'विश्वकर्मन्हविषा' (२५) 'चक्षुषः पिता' (२६) 'विश्वकर्मा विमनाः' (२७) 'यो नः' (२८) 'त आयजन्त' (२९) 'परो दिवा' (३०) 'तमिद्गर्भम्' (३१) 'न तम्' (३२) 'विश्वकर्मा हि' इत्येषां विश्वकर्मा ।
(३३) 'आशुः शिशानः' (३४) 'सङ्क्रन्दनेनानिमिषेण' (३५) 'स इषुहस्तैः' (३६) 'बृहस्पते परिदीया' (३७) 'बलविज्ञाय स्थविरः' (३८) 'गोत्रभिदङ्गोविदम्' (३९) 'अभि गोत्राणि' (४०) 'इन्द्र आसाम्' (४१) 'इन्द्रस्य वृष्णः' (४२) 'उद्धर्षय मघवन्' (४३) 'अस्माकमिन्द्रः' (४४) 'अमीषाञ्चित्तम्' इत्येषामिन्द्रः ।
(४५) 'अवसृष्टा परापत' इत्यस्येषुः ।
(४६) 'प्रेता जयता' इत्यस्य योद्धारः ।
(४७) 'असौ या' इत्यस्य मरुतः ।
(४८) 'यत्र बाणाः' (४९) 'मर्माणि ते' इत्यनयोर्लिङ्गोक्ता ।
(५०) 'उदेनमुत्तराम्' इत्यस्याग्निः ।
(५१) 'इन्द्रेमम्' इत्यस्येन्द्रः ।
(५२) 'यस्य कुर्मः' इत्यस्य लिङ्गोक्ता ।
(५३) 'उदु त्वा' इत्यस्याग्निः ।
(५४) 'पञ्च दिशः' इत्यस्य दिशः ।
(५५) 'समिद्धे अग्नौ' (५६) 'दैव्याय धर्त्रे' इत्यनयोरग्निः ।
(५७) 'वीतꣳ हविः' इत्यस्य हविर्यज्ञश्च ।
(५८) 'सूर्यरश्मिर्हरिकेशः' इत्यस्याग्निः ।
(५९) 'विमान एषः' (६०) 'उक्षा समुद्रः' इत्यनयोरादित्यः ।
(६१) 'इन्द्रं विश्वाः' इत्यस्येन्द्रः ।
(६२) 'देवहूर्यज्ञः' इत्यस्य यज्ञः ।
(६३) 'वाजस्य मा' इत्यस्येन्द्रः ।
(६४) 'उद्ग्राभश्च' इत्यस्येन्द्राग्नी ।
(६५) 'क्रमध्वमग्निना' (६६) 'प्राचीमनु' (६७) 'पृथिव्या अहम्' (६८) 'स्वर्यन्तः' (६९) 'अग्ने प्रेहि' (७०) 'नक्तोषासा समनसा' (७१) 'अग्ने सहस्राक्ष' (७२) 'सुपर्णोसि' (७३) 'आजुह्वानः सुप्रतीकः' इत्येषामग्निः ।
(७४) 'ताꣳ सवितुः' इत्यस्य सविता ।
(७५) 'विधेम ते' इत्यस्य त्रिस्थानोऽग्निः ।
(७६) 'प्रेद्धो अग्ने' (७७) 'अग्ने तमद्य' इत्यनयोरग्निः ।

(७८) 'चित्तिञ्जुहोमि' इत्यस्य विश्वकर्मा ।
(७९) 'सप्त ते' इत्यस्याग्निः ।
(८०) 'शुक्रज्योतिश्च' (८१) 'ईदृङ्' (८२) 'ऋतश्च' (८३) 'ऋतजिच्च' (८४) 'ईदृक्षास एतादृक्षासः' (८५) 'स्वतवाँश्च' (८६) 'इन्द्रन्दैवीः' इत्येषां मरुतः ।
(८७) 'इमꣳ स्तनम्' (८८) 'घृतम्मिमिक्षे' (८९) 'समुद्रादूर्मिः' (९०) 'वयन्नाम' (९१) 'चत्वारि शृङ्गा' (९२) 'त्रिधा हितम्' (९३) 'एता अर्षन्ति' (९४) 'सम्यक्स्रवन्ति' (९५) 'सिन्धोरिव' (९६) 'अभिप्रवन्त' (९७) 'कन्या इव' (९८) 'अभ्यर्षत सुष्टुतिम्' (९९) 'धामन्ते' इत्येषामग्निः ।

छन्दः (३) 'ऋतव स्थ' इत्यस्य बृहती पङ्क्तिर्वा, (४) 'समुद्रस्य त्वा' (५) 'हिमस्य त्वा' इत्यनयोर्गायत्री, (६) 'उपज्मन्नुप' इत्यस्य जगती त्रिष्टुब्वा, (७) 'अपामिदम्' इत्यस्य बृहती, (८) 'अग्ने पावक' (९) 'स नः पावक' इत्यनयोर्गायत्री, (१०) 'पावकया यः' इत्यस्य जगती, (११) 'नमस्ते हरसे' इत्यस्य बृहती, (१३) 'ये देवा देवानाम्' (१४) 'ये देवा देवेषु' इत्यनयोर्जगती, (१५) 'प्राणदा अपानदाः' इत्यस्य बृहती पङ्क्तिर्वा, (१६) 'अग्निस्तिग्मेन' इत्यस्य गायत्री, (१७) 'य इमा' इत्यारभ्य (४४) 'अमीषाञ्चित्तम्' इत्यन्तानां त्रिष्टुप्, (४५) 'अवसृष्टा परापत' (४६) 'प्रेता जयता' इत्यनयोरनुष्टुप्, (४७) 'असौ या' इत्यस्य त्रिष्टुप्, (४८) 'यत्र बाणाः' इत्यस्य पङ्क्तिः, (४९) 'मर्माणि ते' इत्यस्य त्रिष्टुप्, (५०) 'उदेनमुत्तराम्' इत्यारभ्य (५३) 'उदु त्वा' इत्यन्तानामनुष्टुप्, (५४) 'पञ्च दिशः' (५५) 'समिद्धे अग्नौ' इत्यनयोस्त्रिष्टुप्, (५६) 'दैव्याय धर्त्रे' इत्यस्य पङ्क्तिर्बृहती वा, (५७) 'वीतꣳ हविः' इत्यस्य बृहती, (५८) 'सूर्यरश्मिर्हरिकेशः' (५९) 'विमान एषः' (६०) 'उक्षा समुद्रः' इत्येषां त्रिष्टुप्, (६१) 'इन्द्रं विश्वाः' इत्यारभ्य (६५) 'क्रमध्वमग्निना' इत्यन्तानामनुष्टुप्, (६६) 'प्राचीमनु' इत्यस्य त्रिष्टुप्, (६७) 'पृथिव्या अहम्' इत्यस्य पिपीलिकमध्या बृहती, (६८) 'स्वर्यन्तः' इत्यस्यानुष्टुप्, (६९) 'अग्ने प्रेहि' (७०) 'नक्तोषासा समनसा' इत्यनयोस्त्रिष्टुप्, (७१) 'अग्ने सहस्राक्ष' इत्यस्य विराट्, (७२) 'सुपर्णोसि गरुत्मान्' इत्यस्य पङ्क्तिः, (७३) 'आजुह्वानः सुप्रतीकः' (७४) 'ताꣳ सवितुः' (७५) 'विधेम ते' इत्येषां त्रिष्टुप्, (७६) 'प्रेद्धो अग्ने' इत्यस्य विराट्, (७७) 'अग्ने तम्' इत्यस्य पदपङ्क्तिः, (७८) 'चित्तिञ्जुहोमि' इत्यस्यातिजगती, (७९) 'सप्त ते' इत्यस्य त्रिष्टुप्, (८०) 'शुक्रज्योतिश्च' इत्यस्योष्णिक्, (८१) 'ईदृङ्' (८२) 'ऋतश्च' इत्यनयोर्गायत्री, (८३) 'ऋतजिच्च' इत्यस्योष्णिक्, (८४) 'ईदृक्षास एतादृक्षासः' इत्यस्य जगती, (८५) 'स्वतवाँश्च' इत्यस्य गायत्र्युष्णिग्वा, (८७) 'इमꣳ स्तनम्' इत्यारभ्य (९९) 'धामन्ते' इत्यन्तानां त्रिष्टुप् ॥

॥ हरिः ॐ ॥

॥१॥ अश्म्मन्नूर्ज्जम्पर्व्वते शिश्श्रियाणामद्भ्यऽओषधीब्भ्यो व्वनस्प्पतिब्भ्योऽअधि सम्भृतम्प-
यः । तान्नऽइषमूर्ज्जन्धत्त मरुतः सꣳरराणाऽअश्म्मँस्ते क्षुन्मयि तऽऊर्ग्ग्यन्द्द्विष्म-
स्तन्ते शुगृच्छतु ॥१॥
इमा मेऽअग्नऽइष्टका धेनवः सन्त्वेका च दश च दश च शतञ्च शतञ्च सहस्रञ्च
सहस्रञ्चायुतञ्चायुतञ्च नियुतञ्च नियुतञ्च प्प्रयुतञ्चार्ब्बुदञ्च न्यर्ब्बुदञ्च समुद्रश्च मद्ध्य-
ञ्चान्तश्च परार्द्धश्चैता मेऽअग्नऽइष्टका धेनवः सन्त्वमुत्रामुष्म्मिँल्लोके ॥२॥
ऋतव स्थऽऋतावृधऽऋतुष्ठा स्थऽऋतावृधः ।
घृतश्च्युतो मधुश्च्युतो विराजो नाम कामदुघाऽअक्षीयमाणाः ॥३॥
समुद्रस्य त्वावकयाग्ने परिव्ययामसि । पावकोऽअस्म्मब्भ्यꣳ शिवो भव ॥४॥
हिमस्य त्वा जरायुणाग्ने परिव्ययामसि । पावकोऽअस्म्मब्भ्यꣳ शिवो भव ॥५॥
उप ज्मन्नुप वेतसेवतर नदीष्ष्वा । अग्ने पित्तमपामसि मण्डूकि ताभिरागहि सेमन्नो
यज्ञम्पावकवर्ण्णꣳ शिवङ्कृधि ॥६॥
अपामिदन्न्ययनꣳ समुद्रस्य निवेशनम् ।
अन्न्याँस्तेऽअस्म्मत्तपन्तु हेतयः पावकोऽअस्म्मब्भ्यꣳ शिवो भव ॥७॥
अग्ने पावक रोचिषा मन्द्रया देव जिह्वया । आ देवान्वक्षि यक्षि च ॥८॥
स नः पावक दीदिवोग्ने देवाँ२ऽइहावह । उप यज्ञꣳ हविश्च नः ॥९॥
पावकया यश्चित्तयन्त्या कृपा क्षामन्रुरुचऽउषसो न भानुना ।
तूर्व्वन्न यामन्नेतशस्य नू रणऽआ यो घृणे न ततृषाणोऽअजरः ॥१०॥

॥२॥ नमस्ते हरसे शोचिषे नमस्तेऽअस्त्वर्च्चिषे ।
अन्न्याँस्तेऽअस्म्मत्तपन्तु हेतयः पावकोऽअस्म्मब्भ्यꣳ शिवो भव ॥११॥
नृषदे वेडप्सुषदे वेड्बर्हिषदे वेड्वनसदे वेट्स्वर्व्विदे वेट् ॥१२॥
ये देवा देवानाँय्यज्ञिया यज्ञियानाꣳ सँव्वत्सरीणमुप भागमासते ।
अहुतादो हविषो यज्ञेऽअस्म्मिन्त्स्वयम्पिबन्तु मधुनो घृतस्य ॥१३॥
ये देवा देवेष्ष्वधि देवत्त्वमायन्ये ब्रह्मणः पुरऽएतारोऽअस्य ।
येब्भ्यो नऽऋते पवते धाम किञ्चन न ते दिवो न पृथिव्याऽअधि स्नुषु ॥१४॥
प्राणदाऽअपानदा व्यानदा वर्च्चोदा वरिवोदाः ।
अन्न्याँस्तेऽअस्म्मत्तपन्तु हेतयः पावकोऽअस्म्मब्भ्यꣳ शिवो भव ॥१५॥

॥३॥ अग्निस्तिग्ग्मेन शोचिषा यासद्विश्श्वन्न्यत्रिणम् । अग्निर्न्नो वनते रयिम् ॥१६॥
यऽइमा विश्श्वा भुवनानि जुह्वदृषिर्होता न्यसीदत्पिता नः ।
सऽआशिषा द्रविणमिच्छमानः प्प्रथमच्छदवराँ२ऽआविवेश ॥१७॥
किꣳ स्विदासीदधिष्ठानमारम्भणङ्कतमत्स्वित्कथासीत् ।
यतो भूमिञ्जनयन्विश्श्वकर्म्मा वि द्यामौर्ण्णोन्महिना विश्श्वचक्षाः ॥१८॥
विश्श्वतश्चक्षुरुत विश्श्वतोमुखो विश्श्वतोबाहुरुत विश्श्वतस्प्पात् ।
सम्बाहुब्भ्यान्धमति सम्पतत्रैर्द्यावाभूमी जनयन्देवऽएकः ॥१९॥
किꣳ स्विद्वनङ्कऽउ स वृक्षऽआस यतो द्यावापृथिवी निष्टतक्षुः ।
मनीषिणो मनसा पृच्छतेदु तद्यदद्ध्यतिष्ठद्भुवनानि धारयन् ॥२०॥

या ते धामानि परमाणि यावमा या मध्यमा विश्श्वकर्म्मन्नुतेमा ।
शिक्क्षा सखिब्भ्यो हविषि स्वधावः स्वयँय्यजस्व तन्न्वँवृधानः ॥२१॥
विश्श्वकर्म्मन्हविषा वावृधानः स्वयँय्यजस्व पृथिवीमुत द्याम् ।
मुह्यन्त्वन्न्येऽअभितः सपत्क्नाऽइहास्म्माकम्मघवा सूरिरस्तु ॥२२॥
वाचस्प्पतिँव्विश्श्वकर्म्माणमूतये मनोजुवँव्वाजेऽअद्या हुवेम ।
स नो विश्श्वानि हवनानि जोषद्विश्श्वशम्भूरवसे साधुकर्म्मा ॥२३॥
विश्श्वकर्म्मन्हविषा वर्द्धनेन त्रातारमिन्द्रमकृणोरवद्ध्यम् ।
तस्म्मै विशः समनमन्त पूर्व्वीरयमुग्ग्रो विहव्यो यथासत् ॥२४॥

॥४॥ चक्क्षुषः पिता मनसा हि धीरो घृतमेनेऽअजनन्नम्नमाने ।
यदेदन्ताऽअददृहन्त पूर्व्वऽआदिद्द्यावापृथिवीऽअप्प्रथेताम् ॥२५॥
विश्श्वकर्म्मा विमनाऽआद्विहाया धाता विधाता परमोत सन्दृक् ।
तेषामिष्टानि समिषा मदन्ति यत्रा सप्तऽऋषीन्पुरऽएकमाहुः ॥२६॥
यो नः पिता जनिता यो विधाता धामानि वेद भुवनानि विश्श्वा ।
यो देवानान्नामधाऽएकऽएव तꣳ सम्प्प्रश्नम्भुवना यन्त्यन्न्या ॥२७॥
तऽआयजन्त द्रविणꣳ समस्म्माऽऋषयः पूर्व्वे जरितारो न भूना ।
असूर्त्ते सूर्त्ते रजसि निषत्ते ये भूतानि समकृण्ण्वन्निमानि ॥२८॥
परो दिवा परऽएना पृथिव्व्या परो देवेभिरसुरैर्य्यदस्ति ।
कꣳ स्विद्गर्ब्भम्प्रथमन्दद्ध्रऽआपो यत्र देवाः समपश्श्यन्त पूर्व्वे ॥२९॥
तमिद्गर्ब्भम्प्रथमन्दद्ध्रऽआपो यत्र देवाः समगच्छन्त विश्श्वे ।
अजस्य नाभावद्ध्येकमर्प्पितँय्यस्मिन्विश्श्वानि भुवनानि तस्त्थुः ॥३०॥
न तँव्विदाथ यऽइमा जजानान्न्यद्युष्म्माकमन्तरम्बभूव ।
नीहारेण प्प्रावृता जल्प्प्या चासुतृपऽउक्क्थशासश्चरन्ति ॥३१॥
विश्श्वकर्म्मा ह्यजनिष्ट देवऽआदिद्गन्धर्व्वोऽअभवद्द्वितीयः ।
तृतीयः पिता जनितौषधीनामपाङ्गर्ब्भँव्व्यदधात्पुरुत्रा ॥३२॥
॥५॥ आशुः शिशानो वृषभो न भीमो घनाघनः क्षोभणश्चर्षणीनाम् ।
सङ्क्रन्दनोनिमिषऽएकवीरः शतꣳ सेनाऽअजयत्साकमिन्द्रः ॥३३॥
सङ्क्रन्दनेनानिमिषेण जिष्ष्णुना युत्क्कारेण दुश्श्च्यवनेन धृष्ष्णुना ।
तदिन्द्रेण जयत तत्सहद्ध्वँय्युधो नरऽइषुहस्त्तेन वृष्ष्णा ॥३४॥

सऽइषुहस्त्तैः स निषङ्गिभिर्व्वशी सꣳस्रष्टा स युधऽइन्द्रो गणेन ।
सꣳसृष्टजित्सोमपा बाहुशर्द्ध्युग्रधन्न्वा प्प्रतिहिताभिरस्त्ता ॥३५॥
बृहस्प्पते परिदीया रथेन रक्क्षोहामित्राँ२ऽअपबाधमानः ।
प्रभञ्जन्त्सेनाः प्प्रमृणो युधा जयन्नस्म्माकमेद्ध्यविता रथानाम् ॥३६॥
बलविज्ञाय स्त्थविरः प्प्रवीरः सहस्वान्वाजी सहमानऽउग्ग्रः ।
अभिवीरोऽअभिसत्त्वा सहोजा जैत्रमिन्द्र रथमातिष्ठ गोवित् ॥३७॥
गोत्रभिदङ्गोविदँव्वज्ज्रबाहुञ्जयन्तमज्म्म प्प्रमृणन्तमोजसा ।
इमꣳ सजाताऽअनु वीरयद्ध्वमिन्द्रꣳ सखायोऽअनु सꣳरभद्ध्वम् ॥३८॥
अभि गोत्राणि सहसा गाहमानोदयो वीरः शतमन्न्युरिन्द्रः ।
दुश्श्च्यवनः पृतनाषाडयुद्ध्योऽस्म्माकꣳ सेनाऽअवतु प्र युत्सु ॥३९॥
इन्द्रऽआसान्नेता बृहस्प्पतिर्द्दक्क्षिणा यज्ञः पुरऽएतु सोमः ।
देवसेनानामभिभञ्जतीनाञ्जयन्तीनाम्मरुतो यन्त्वग्ग्रम् ॥४०॥
इन्द्रस्य वृष्ष्णो वरुणस्य राज्ञऽआदित्त्यानाम्मरुताꣳ शर्द्धऽउग्ग्रम् ।
महामनसाम्भुवनच्च्यवानाङ्घोषो देवानाञ्जयतामुदस्त्थात् ॥४१॥
उद्धर्षय मघवन्नायुधान्न्युत्सत्त्वनाम्मामकानाम्मनाꣳसि ।
उद्वृत्रहन्वाजिनाँव्वाजिनान्न्युद्रथानाञ्जयतांय्यन्तु घोषाः ॥४२॥
अस्म्माकमिन्द्रः समृतेषु द्ध्वजेष्ष्वस्म्माकँय्याऽइषवस्ता जयन्तु ।
अस्म्माकँव्वीराऽउत्तरे भवन्त्वस्म्माँ२ऽउ देवाऽअवता हवेषु ॥४३॥
अमीषाञ्चित्तम्प्रतिलोभयन्ती गृहाणाङ्गान्न्यप्प्वे परेहि ।
अभि प्प्रेहि निर्द्दह हृत्सु शोकैरन्धेनामित्त्रास्तमसा सचन्ताम् ॥४४॥
अवसृष्टा परापत शरव्व्ये ब्रह्मसꣳशिते ।
गच्छामित्रान्प्रपद्यस्व मामीषाङ्कञ्चनोच्छिषः ॥४५॥
प्रेता जयता नरऽइन्द्रो वः शर्म्म यच्छतु ।
उग्ग्रा वः सन्तु बाहवोनाधृष्ष्या यथासथ ॥४६॥
असौ या सेना मरुतः परेषामब्भ्यैति नऽओजसा स्प्पर्द्धमाना ।
तां गूहत तमसापव्रतेन यथामीऽअन्न्योऽअन्न्यन्न जानन् ॥४७॥
यत्र बाणाः सम्पतन्ति कुमारा विशिखाऽइव ।
तन्नऽइन्द्रो बृहस्प्पतिरदितिः शर्म्म यच्छतु विश्श्वाहा शर्म्म यच्छतु ॥४८॥

मर्म्माणि ते वर्म्मणा च्छादयामि सोमस्त्वा राजामृतेनानुवस्ताम् ।
उरोर्वरीयो वरुणस्ते कृणोतु जयन्तन्त्वानु देवा मदन्तु ॥४९॥

॥६॥ उदेनमुत्तरान्नयाग्ने घृतेनाहुत । रायस्पोषेण सꣳसृज प्रजया च बहुङ्कृधि ॥५०॥
इन्द्रेमम्प्रतरान्नय सजातानामसद्वशी ।
समेनँवर्च्चसा सृज देवानाम्भागदाऽअसत् ॥५१॥
यस्य कुर्म्मो गृहे हविस्तमग्ने वर्द्धया त्वम् ।
तस्मै देवाऽअधिब्रुवन्नयञ्च ब्रह्मणस्पतिः ॥५२॥
उदु त्वा विश्वे देवाऽअग्ने भरन्तु चित्तिभिः ।
स नो भव शिवस्त्वꣳ सुप्रतीको विभावसुः ॥५३॥
पञ्च दिशो दैवीर्य्यज्ञमवन्तु देवीरपामतिन्दुर्म्मतिम्बाधमानाः ।
रायस्पोषे यज्ञपतिमाभजन्ती रायस्पोषेऽअधि यज्ञोऽअस्थात् ॥५४॥
समिद्धेऽअग्नावधि मामहानऽउक्थपत्रऽईड्यो गृभीतः ।
तप्तङ्घर्म्मम्परिगृह्यायजन्तोर्जा यद्यज्ञमयजन्त देवाः ॥५५॥
दैव्याय धर्त्रे जोष्ट्रे देवश्रीः श्रीमनाः शतपयाः ।
परिगृह्य देवा यज्ञमायन्देवा देवेभ्योऽअध्वर्य्यन्तोऽअस्थुः ॥५६॥
वीतꣳ हविः शमितꣳ शमिता यजध्यै तुरीयो यज्ञो यत्र हव्यमेति ।
ततो वाकाऽआशिषो नो जुषन्ताम् ॥५७॥
सूर्य्यरश्मिर्हरिकेशः पुरस्तात्सविता ज्योतिरुदयाँ॥ऽअजस्रम् ।
तस्य पूषा प्रसवे याति विद्वान्सम्पश्यन्विश्वा भुवनानि गोपाः ॥५८॥
विमानऽएष दिवो मध्यऽआस्तऽआपप्रिवान्रोदसीऽअन्तरिक्षम् ।
स विश्वाचीरभिचष्टे घृताचीरन्तरा पूर्व्वमपरञ्च केतुम् ॥५९॥
उक्षा समुद्रोऽअरुणः सुपर्णः पूर्व्वस्य योनिम्पितुराविवेश ।
मध्ये दिवो निहितः पृश्निरश्मा विचक्रमे रजसस्पात्यन्तौ ॥६०॥
इन्द्रँविश्वाऽअवीवृधन्त्समुद्रव्यचसङ्गिरः ।
रथीतमꣳ रथीनाँवाजानाꣳसत्पतिम्पतिम् ॥६१॥
देवहूर्य्यज्ञऽआ च वक्षत्सुम्नहूर्य्यज्ञऽआ च वक्षत् ।
यक्षदग्निर्देवो देवाँ॥ऽआ च वक्षत् ॥६२॥

वाजस्य मा प्रसवऽउद्ग्राभेणोदग्रभीत् ।
अधा सपत्नानिन्द्रो मे निग्राभेणाधराँ॥ऽअकः ॥६३॥
उद्ग्राभञ्च निग्राभञ्च ब्रह्म देवाऽअवीवृधन् ।
अधा सपत्नानिन्द्राग्नी मे विषूचीनान्व्यस्यताम् ॥६४॥

॥७॥ क्रमध्वमग्निना नाकमुख्यꣳ हस्तेषु बिभ्रतः ।
दिवस्पृष्ठꣳस्वर्ग्गत्वा मिश्रा देवेभिराध्वम् ॥६५॥
प्राचीमनु प्रदिशम्प्रेहि विद्वानग्नेरग्ने पुरोऽअग्निर्भवेह ।
विश्वाऽआशा दीद्यानो विभाह्यूर्जन्नो धेहि द्विपदे चतुष्पदे ॥६६॥
पृथिव्याऽअहमुदन्तरिक्षमारुहमन्तरिक्षाद्दिवमारुहम् ।
दिवो नाकस्य पृष्ठात्स्वर्ज्योतिरगामहम् ॥६७॥
स्वर्य्यन्तो नापेक्षन्तऽआ द्याꣳरोहन्ति रोदसी ।
यज्ञँये विश्वतोधारꣳ सुविद्वाꣳसो वितेनिरे ॥६८॥
अग्ने प्रेहि प्रथमो देवयताञ्चक्षुर्द्देवानामुत मर्त्यानाम् ।
इयक्षमाणा भृगुभिः सजोषाः स्वर्य्यन्तु यजमानाः स्वस्ति ॥६९॥
नक्तोषासा समनसा विरूपे धापयेते शिशुमेकꣳ समीची ।
द्यावाक्षामा रुक्मोऽअन्तर्विभाति देवाऽअग्निन्धारयन्द्रविणोदाः ॥७०॥
अग्ने सहस्राक्ष शतमूर्द्धञ्छतन्ते प्राणाः सहस्रँव्यानाः ।
त्वꣳ साहस्रस्य रायऽईशिषे तस्मै ते विधेम वाजाय स्वाहा ॥७१॥
सुपर्णोसि गरुत्मान्पृष्ठे पृथिव्याः सीद ।
भासान्तरिक्षमापृण ज्योतिषा दिवमुत्तभान तेजसा दिशऽउद्दृꣳह ॥७२॥
आजुह्वानः सुप्रतीकः पुरस्तादग्ने स्वँयोनिमासीद साधुया ।
अस्मिन्त्सधस्थेऽअध्युत्तरस्मिन्विश्वे देवा यजमानश्च सीदत ॥७३॥
ताꣳ सवितुर्व्वरेण्यस्य चित्रामाहँवृणे सुमतिँविश्वजन्याम् ।
यामस्य कण्वोऽअदुहत्प्रपीनाꣳ सहस्रधाराम्पयसा महीङ्गाम् ॥७४॥
विधेम ते परमे जन्मन्नग्ने विधेम स्तोमैरवरे सधस्थे ।
यस्माद्योनेरुदारिथा यजे तम्प्र त्वे हवीꣳषि जुहुरे समिद्धे ॥७५॥
प्रेद्धोऽअग्ने दीदिहि पुरो नोजस्रया सूर्म्या यविष्ठ ।
त्वाꣳ शश्वन्तऽउपयन्ति वाजाः ॥७६॥

अग्ने तमद्याश्वन्न स्तोमैः क्रतुन्न भद्रꣳ हृदिस्पृशम् । ऋध्यामा तऽओहैः ॥७७॥
चित्तिञ्जुहोमि मनसा घृतेन यथा देवाऽइहागमन्वीतिहोत्राऽऋतावृधः ।
पत्ये विश्वस्य भूमनो जुहोमि विश्वकर्म्मणे विश्वाहादाभ्यꣳ हविः ॥७८॥
सप्त तेऽअग्ने समिधः सप्त जिह्वाः सप्तऽऋषयः सप्त धाम प्प्रियाणि ।
सप्त होत्राः सप्तधा त्वा यजन्ति सप्त योनीरापृणस्व घृतेन स्वाहा ॥७९॥

॥८॥ शुक्रज्ज्योतिश्च चित्रज्ज्योतिश्च सत्यज्ज्योतिश्च ज्ज्योतिष्म्माँश्च ।
शुक्रश्चऽऋतपाश्चात्त्यꣳहाः ॥८०॥
ईदृङ्चान्न्यादृङ् सदृङ्च प्प्रतिसदृङ् । मितश्च सम्मितश्च सभराः ॥८१॥
ऋतश्च सत्त्यश्च ध्रुवश्च धरुणश्च । धर्त्ता च विधर्त्ता च विधारयः ॥८२॥
ऋतजिच्च सत्त्यजिच्च सेनजिच्च सुषेणश्च । अन्तिमित्रश्च दूरेऽअमित्रश्च गणः ॥८३॥
ईदृक्षासऽएतादृक्षासऽऊ षु णः सदृक्षासः प्प्रतिसदृक्षासऽएतन ।
मितासश्च सम्मितासो नोऽअद्य सभरसो मरुतो यज्ञेऽअस्म्मिन् ॥८४॥
स्वतवाँश्च प्प्रघासी च सान्तपनश्च गृहमेधी च । क्रीडी च शाकी चोज्जेषी ॥८५॥
इन्द्रन्दैवीर्व्विशो मरुतोनुवर्त्मानोभवन्यथेन्द्रन्दैवीर्व्विशो मरुतोनुवर्त्मानोभवन् ।
एवमिमँय्यजमानन्दैवीश्च विशो मानुषीश्चानुवर्त्मानो भवन्तु ॥८६॥

॥९॥ इमꣳ स्तनमूर्ज्जस्वन्तन्धयापाम्प्रपीनमग्ने सरिरस्य मद्ध्ये ।
उत्सञ्जुषस्व मधुमन्तमर्व्वन्त्समुद्द्रियꣳ सदनमाविशस्व ॥८७॥
घृतम्मिमिक्षे घृतमस्य योनिर्घृते श्श्रितो घृतम्वस्य धाम ।
अनुष्ष्वधमावह मादयस्व स्वाहाकृतँवृषभ वक्षि हव्व्यम् ॥८८॥
समुद्द्रादूर्म्मिर्म्मधुमाँ२ऽउदारदुपाꣳशुना सममृतत्त्वमानट् ।
घृतस्य नाम गुह्यँय्यदस्ति जिह्वा देवानाममृतस्य नाभिः ॥८९॥
वयन्नाम प्प्रब्रवामा घृतस्यास्म्मिन्यज्ञे धारयामा नमोभिः ।
उप ब्रह्मा श्शृणवच्छस्यमानञ्चतुःश्शृङ्गोवमीद्गौरऽएतत् ॥९०॥
चत्त्वारि श्शृङ्गा त्रयोऽअस्य पादा द्वे शीर्षे सप्त हस्तासोऽअस्य ।
त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्याँ२ऽआविवेश ॥९१॥
त्रिधा हितम्पणिभिर्ग्गुह्यमानङ्गवि देवासो घृतमन्ववविन्दन् ।
इन्द्रऽएकꣳ सूर्य्यऽएकञ्जजान वेनादेकꣳ स्वधया निष्टतक्षुः ॥९२॥
एताऽअर्षन्ति हृद्यात्समुद्द्राच्छतव्रजा रिपुणा नावचक्षे ।
घृतस्य धाराऽअभिचाकशीमि हिरण्ण्ययो वेतसो मद्ध्यऽआसाम् ॥९३॥
सम्म्यक्स्रवन्ति सरितो न धेनाऽअन्तर्हृदा मनसा पूयमानाः ।
एतेऽअर्षन्त्यूर्म्मयो घृतस्य मृगाऽइव क्षिपणोरीषमाणाः ॥९४॥
सिन्धोरिव प्प्राध्वने शूघनासो वातप्प्रमियः पतयन्ति यह्वाः ।
घृतस्य धाराऽअरुषो न वाजी काष्ठा भिन्दन्नूर्म्मिभिः पिन्वमानः ॥९५॥
अभिप्प्रवन्त समनेव योषाः कल्ल्याण्ण्यः स्मयमानासोऽअग्निम् ।
घृतस्य धाराः समिधो नसन्त ता जुषाणो हर्य्यति जातवेदाः ॥९६॥
कन्न्याऽइव वहतुमेतवाऽउऽअञ्ज्यञ्जानाऽअभिचाकशीमि ।
यत्र सोमः सूयते यत्र यज्ञो घृतस्य धाराऽअभि तत्पवन्ते ॥९७॥
अब्भ्यर्षत सुष्टुतिङ्गव्व्यमाजिमस्म्मासु भद्द्रा द्रविणानि धत्त ।
इमँय्यज्ञन्नयत देवता नो घृतस्य धारा मधुमत्पवन्ते ॥९८॥
धामन्ते विश्वम्भुवनमधिश्श्रितमन्तः समुद्द्रे हृद्द्यन्तरायुषि ।
अपामनीके समिथे यऽआभृतस्तमश्श्याम मधुमन्तन्तऽऊर्म्मिम् ॥९९॥

॥ इति सप्तदशोऽध्यायः ॥

# अथाष्टादशोऽध्यायः

ऋषिः (१) 'वाजश्च मे' इत्यारभ्य (७७) 'त्वं यविष्ठ्य' इत्यन्तानां सामान्यतः प्रजापतिः साध्या वा ऋषयः । विशेषतश्च—
(१) 'वाजश्च मे' इत्यारभ्य (२९) 'स्तोमश्च' इत्यन्तानां देवाः, (३१) 'विश्वे अद्य' इत्यस्य धानाको लुशः, (४६) 'यास्ते' (४७) 'या वः' इत्यनयोरिन्द्राग्नी, (४९) 'तत्त्वा यामि' इत्यस्य शुनःशेपः, (५६) 'इष्टो यज्ञः' (५७) 'इष्टो अग्निः' इत्यनयोर्गालवः, (५८) 'यदाकूदात्' इत्यारभ्य (६५) 'यत्र धाराः' इत्यन्तानां विश्वकर्मा, (६६) 'अग्निरस्मि' इत्यस्य भारतौ देवश्रवोदेववातौ ।
(६८) 'वार्त्रहत्याय शवसे' इत्यारभ्य (७४) 'अश्याम तम्' इत्यन्तानामिन्द्रस्तत्रापि—(६८) 'वार्त्रहत्याय शवसे' (६९) 'सहदानुम्पुरुहूत' इत्यनयोर्विश्वामित्रः, (७०) 'वि न इन्द्र' इत्यस्य भारद्वाजः शासः, (७१) 'मृगो न' इत्यस्यैन्द्रो जयः, (७३) 'पृष्टो दिवि' इत्यस्य कुत्सः, (७४) 'अश्याम तम्' इत्यस्य भरद्वाजः, (७५) 'वयन्ते' इत्यस्य कात्य उत्कीलः, (७७) 'त्वं यविष्ठ' इत्यस्य काव्य उशनाः ॥

देवता (१) 'वाजश्च मे' (२) 'प्राणश्च मे' (३) 'ओजश्च मे' (४) 'ज्यैष्ठ्यञ्च मे' (५) 'सत्यञ्च मे' (६) 'ऋतञ्च मे' (७) 'यन्ता च मे' (८) 'शञ्च मे' (९) 'ऊर्क्च मे' (१०) 'रयिश्च मे' (११) 'वित्तञ्च मे' (१२) 'व्रीहयश्च मे' (१३) 'अश्मा च मे' (१४) 'अग्निश्च मे' (१५) 'वसु च मे' (१६) 'अग्निश्च मे' (१७) 'मित्रश्च मे' (१८) 'पृथिवी च मे' (१९) 'अꣳशुश्च मे' (२०) 'आग्रयणश्च मे' (२१) 'स्रुचश्च मे' (२२) 'अग्निश्च मे' (२३) 'व्रतञ्च मे' (२४) 'एका च मे' (२५) 'चतस्रश्च मे' (२६) 'त्र्यविश्च मे' (२७) 'पष्ठवाट् च मे' (२८) 'वाजाय स्वाहा' (२९) 'आयुर्यज्ञेन' इत्येषामग्निः ।

(३०) 'वाजस्य नु' इत्यस्य पृथिवी, 'तस्याच्चो देवः' इत्यस्य सविता ।
(३१) 'विश्वे अद्य' इत्यस्य विश्वे देवाः ।
(३२) 'वाजो नः सप्त' (३३) 'वाजो नो अद्य' (३४) 'वाजः पुरस्तात्' इत्येषामन्नम् ।
(३५) 'सम्मा सृजामि' (३६) 'पयः पृथिव्याम्' इत्यनयोरग्निः ।
(३७) 'देवस्य त्वा' इत्यस्य सविता, 'सरस्वत्यै वाचः' इत्यस्य लिङ्गोक्ता ।
(३८) 'ऋताषाडृतधामा' (३९) 'सꣳहितो विश्वसामा' (४०) 'सुषुम्णः सूर्यरश्मिः' (४१) 'इषिरो विश्वव्यचा' (४२) 'भुज्युः सुपर्णः' (४३) 'प्रजापतिर्विश्वकर्मा' इत्येषाम्, 'स न इदम्' इत्यादिषण्णां च गन्धर्वाप्सरसः ।
(४४) 'स नो भुवनस्य' इत्यस्य प्रजापतिः ।
(४५) 'समुद्रोसि' 'मारुतोसि' 'अवस्यूरसि' इत्येषां वायुः ।
(४६) 'यास्ते' (४७) 'या वः' (४८) 'रुचन्नः' इत्येषामग्निः ।
(४९) 'तत्त्वा यामि' इत्यस्य वरुणः ।
(५०) 'स्वर्ण घर्मः' 'स्वर्णार्कः' 'स्वर्ण शुक्रः' 'स्वर्ण ज्योतिः' 'स्वर्ण सूर्यः' (५१) 'अग्निं युनज्मि' (५२) 'इमौ ते' (५३) 'इन्दुर्दक्षः' (५४) 'दिवो मूर्धा' (५५) 'विश्वस्य मूर्धन्' इत्येषामग्निः ।
(५६) 'इष्टो यज्ञः' इत्यस्य यजमानः ।
(५७) 'इष्टो अग्निः' (५८) 'यदाकूतात्' (५९) 'एतꣳ सधस्थ' इत्येषामग्निः ।
(६०) 'एतञ्जानाथ' इत्यस्याग्निर्देवा वा ।
(६१) 'उद्बुध्यस्वाग्ने' (६२) 'येन वहसि' (६३) 'प्रस्तरेण परिधिना' (६४) 'यद्दत्तम्' (६५) 'यत्र धाराः' (६६) 'अग्निरस्मि' इत्येषामग्निः ।
(६७) 'ऋचो नामास्मि' इत्यस्यात्मा, 'ये अग्नयः' (६८) 'वार्त्रहत्याय शवसे' (६९) 'सहदानुम्पुरुहूत' (७०) 'वि न इन्द्र' (७१) 'मृगो न' (७२) 'वैश्वानरो नः' (७३) 'पृष्टो दिवि' (७४) 'अश्याम तम्' (७५) 'वयन्ते' इत्येषामग्निः ।
(७६) 'धामच्छदग्निः' इत्यस्य विश्वे देवाः ।
(७७) 'त्वं यविष्ठ' इत्यस्याग्निः ॥

छन्दः (३०) 'वाजस्य नु' इत्यस्यातिजगती, (३१) 'विश्वे अद्य' इत्यस्य त्रिष्टुप्, (३२) 'वाजो नः सप्त' इत्यस्यानुष्टुप्, (३३) 'वाजो नो अद्य' (३४) 'वाजः पुरस्तात्' इत्यनयोस्त्रिष्टुप्, (३५) 'सम्मा' (३६) 'पयः पृथिव्याम्' इत्यनयोर्विराट्, (४४) 'स नः' इत्यस्य प्रस्तारपङ्क्तिः, (४६) 'यास्ते' (४७) 'या वः' (४८) 'रुचन्नः' इत्येषामनुष्टुप्, (४९) 'तत्त्वा यामि' (५१) 'अग्निं युनज्मि' (५२) 'इमौ ते' इत्येषां त्रिष्टुप्, (५३) 'इन्दुर्दक्षः' इत्यस्य पङ्क्तिः, (५४) 'दिवो मूर्धा' इत्यस्य परोष्णिक्, (५५) 'विश्वस्य मूर्धन्' इत्यस्य जगती महापदपङ्क्तिः, (५६) 'इष्टो यज्ञो' इत्यस्योष्णिक्, (५७) 'इष्टो अग्निः' इत्यस्य गायत्री, (५८) 'यदाकूतात्' इत्यस्य जगती, (५९) 'एतꣳ सधस्थ' (६०) 'एतञ्जानाथ' (६१) 'उ ध्यस्वाग्ने' इत्येषां त्रिष्टुप्, (६२) 'येन वहसि' इत्यारभ्य (६५) 'यत्र धाराः' इत्यन्तानामनुष्टुप्, (६६) 'अग्निरस्मि' इत्यस्य त्रिष्टुप्, (६७) 'ये अग्नयः' इत्यस्यानुष्टुप्, (६८) 'वार्त्रहत्याय शवसे' इत्यस्य गायत्री, (६९) 'सहदानुम्पुरुहूत' इत्यस्य त्रिष्टुप्, (७०) 'वि न इन्द्र' इत्यस्यानुष्टुप्, (७१) 'मृगो न' इत्यस्य त्रिष्टुप्, (७२) 'वैश्वानरो नः' इत्यस्य गायत्री, (७३) 'पृष्टो दिवि' (७४) 'अश्याम तम्' (७५) 'वयन्ते' इत्येषां त्रिष्टुप्, (७६) 'धामच्छदग्निः' इत्यस्यानुष्टुप्, (७७) 'त्वं यविष्ठ' इत्यस्य गायत्री ॥

॥ हरिःॐ ॥

॥१॥ वाजश्च मे प्रसवश्च मे प्रयतिश्च मे प्रसितिश्च मे धीतिश्च मे क्रतुश्च मे स्वरश्च मे श्लोकश्च मे श्रवश्च मे श्रुतिश्च मे ज्योतिश्च मे स्वश्च मे यज्ञेन कल्पन्ताम् ॥१॥

प्राणश्च मेपानश्च मे व्यानश्च मेसुश्च मे चित्तञ्च मऽआधीतञ्च मे वाक्च मे मनश्च मे चक्षुश्च मे श्रोत्रञ्च मे दक्षश्च मे बलञ्च मे यज्ञेन कल्पन्ताम् ॥२॥

ओजश्च मे सहश्च मऽआत्मा च मे तनूश्च मे शर्म्म च मे वर्म्म च मेङ्गानि च मेस्थीनि च मे परूꣳषि च मे शरीराणि च मऽआयुश्च मे जरा च मे यज्ञेन कल्पन्ताम् ॥३॥

ज्यैष्ठ्यञ्च मऽआधिपत्यञ्च मे मन्युश्च मे भामश्च मेमश्च मेम्भश्च मे जेमा च मे महिमा च मे वरिमा च मे प्रथिमा च मे वर्षिमा च मे द्राघिमा च मे वृद्धञ्च मे वृद्धिश्च मे यज्ञेन कल्पन्ताम् ॥४॥

सत्यञ्च मे श्रद्धा च मे जगच्च मे धनञ्च मे विश्वञ्च मे महश्च मे क्रीडा च मे मोदश्च मे जातञ्च मे जनिष्यमाणञ्च मे सूक्तञ्च मे सुकृतञ्च मे यज्ञेन कल्पन्ताम् ॥५॥

ऋतञ्च मेमृतञ्च मेयक्ष्मञ्च मेनामयच्च मे जीवातुश्च मे दीर्घायुत्वञ्च मेनमित्रञ्च मेभयञ्च मे सुखञ्च मे शयनञ्च मे सूषाश्च मे सुदिनञ्च मे यज्ञेन कल्पन्ताम् ॥६॥

यन्ता च मे धर्त्ता च मे क्षेमश्च मे धृतिश्च मे विश्वञ्च मे महश्च मे संविच्च मे ज्ञात्रञ्च मे सूश्च मे प्रसूश्च मे सीरञ्च मे लयश्च मे यज्ञेन कल्पन्ताम् ॥७॥

॥२॥ शञ्च मे मयश्च मे प्रियञ्च मेनुकामश्च मे कामश्च मे सौमनसश्च मे भगश्च मे द्रविणञ्च मे भद्रञ्च मे श्रेयश्च मे वसीयश्च मे यशश्च मे यज्ञेन कल्पन्ताम् ॥८॥

॥३॥ ऊर्क्च मे सूनृता च मे पयश्च मे रसश्च मे घृतञ्च मे मधु च मे सग्धिश्च मे सपीतिश्च मे कृषिश्च मे वृष्टिश्च मे जैत्रञ्च मऽऔद्भिद्यञ्च मे यज्ञेन कल्पन्ताम् ॥९॥

रयिश्च मे रायश्च मे पुष्टञ्च मे पुष्टिश्च मे विभु च मे प्रभु च मे पूर्णञ्च मे पूर्णतरञ्च मे कुयवञ्च मेक्षितञ्च मेन्नञ्च मेक्षुच्च मे यज्ञेन कल्पन्ताम् ॥१०॥

वित्तञ्च मे वेद्यञ्च मे भूतञ्च मे भविष्यच्च मे सुगञ्च मे सुपथ्यञ्च मऽऋद्धञ्च मऽ ऋद्धिश्च मे क्लृप्तञ्च मे क्लृप्तिश्च मे मतिश्च मे सुमतिश्च मे यज्ञेन कल्पन्ताम् ॥११॥

व्रीहयश्च मे यवाश्च मे माषाश्च मे तिलाश्च मे मुद्गाश्च मे खल्वाश्च मे प्रियङ्गवश्च मेणवश्च मे श्यामाकाश्च मे नीवाराश्च मे गोधूमाश्च मे मसूराश्च मे यज्ञेन कल्पन्ताम् ॥१२॥

॥४॥ अश्मा च मे मृत्तिका च मे गिरयश्च मे पर्वताश्च मे सिकताश्च मे वनस्पतयश्च

मे हिरण्यञ्च मेयश्च मे श्श्यामञ्च मे लोहञ्च मे सीसञ्च मे त्रपु च मे यज्ञेन कल्प्पन्ताम् ॥१३॥

अग्निश्च मऽआपश्च मे वीरुधश्च मऽओषधयश्च मे कृष्टपच्याश्च मेकृष्टपच्याश्च मे ग्ग्राम्म्याश्च मे पशवऽआरण्ण्याश्च मे वित्तञ्च मे वित्तिश्च मे भूतञ्च मे भूतिश्च मे यज्ञेन कल्प्पन्ताम् ॥१४॥

वसु च मे वसतिश्च मे कर्म्म च मे शक्तिश्च मेर्थश्च मऽएमश्च मऽइत्त्या च मे गतिश्च मे यज्ञेन कल्प्पन्ताम् ॥१५॥

॥५॥ अग्निश्च मऽइन्द्रश्च मे सोमश्च मऽइन्द्रश्च मे सविता च मऽइन्द्रश्च मे सरस्वती च मऽइन्द्रश्च मे पूषा च मऽइन्द्रश्च मे बृहस्प्पतिश्च मऽइन्द्रश्च मे यज्ञेन कल्प्पन्ताम् ॥१६॥

मित्रश्च मऽइन्द्रश्च मे वरुणश्च मऽइन्द्रश्च मे धाता च मऽइन्द्रश्च मे त्वष्टा च मऽइन्द्रश्च मे मरुतश्च मऽइन्द्रश्च मे विश्श्वे च मे देवाऽइन्द्रश्च मे यज्ञेन कल्प्पन्ताम् ॥१७॥

पृथिवी च मऽइन्द्रश्च मेन्तरिक्क्षञ्च मऽइन्द्रश्च मे द्यौश्च मऽइन्द्रश्च मे समाश्च मऽइन्द्रश्च मे नक्क्षत्राणि च मऽइन्द्रश्च मे दिशश्च मऽइन्द्रश्च मे यज्ञेन कल्प्पन्ताम् ॥१८॥

॥६॥ अꣳशुश्च मे रश्मिश्च मेदाब्भ्यश्च मेधिपतिश्च मऽउपाꣳशुश्च मेन्तर्य्यामश्च मऽऐन्द्रवायवश्च मे मैत्रावरुणश्च मऽआश्विनश्च मे प्प्रतिप्प्रस्थानश्च मे शुक्रश्च मे मन्थी च मे यज्ञेन कल्प्पन्ताम् ॥१९॥

आग्ग्रयणश्च मे वैश्श्वदेवश्च मे ध्रुवश्च मे वैश्श्वानरश्च मऽऐन्द्राग्ग्नश्च मे महावैश्श्वदेवश्च मे मरुत्वतीयाश्च मे निष्केवल्ल्यश्च मे सावित्रश्च मे सारस्वतश्च मे पात्नीवतश्च मे हारियोजनश्च मे यज्ञेन कल्प्पन्ताम् ॥२०॥

स्रुचश्च मे चमसाश्च मे वायव्यानि च मे द्रोणकलशश्च मे ग्ग्रावाणश्च मेधिषवणे च मे पूतभृच्च मऽआधवनीयश्च मे वेदिश्च मे बर्हिश्च मेवभृथश्च मे स्वगाकारश्च मे यज्ञेन कल्प्पन्ताम् ॥२१॥

अग्निश्च मे घर्म्मश्च मेर्कश्च मे सूर्य्यश्च मे प्प्राणश्च मेश्श्वमेधश्च मे पृथिवी च मेदितिश्च मे दितिश्च मे द्यौश्च मेङ्गुलयः शक्क्वरयो दिशश्च मे यज्ञेन कल्प्पन्ताम् ॥२२॥

व्रतञ्च मऽऋतवश्च मे तपश्च मे सँव्वत्सरश्च मेहोरात्रेऽऊर्व्वष्ठीवे बृहद्रथन्तरे च मे यज्ञेन कल्प्पन्ताम् ॥२३॥

॥७॥ एका च मे तिस्रश्च मे तिस्रश्च मे पञ्च च मे पञ्च च मे सप्त च मे सप्त च मे नव च मे नव च मऽएकादश च मऽएकादश च मे त्रयोदश च मे त्रयोदश च मे पञ्चदश च मे पञ्चदश च मे सप्तदश च मे सप्तदश च मे नवदश च मे नवदश च मऽएकविꣳशतिश्च मऽएकविꣳशतिश्च मे त्रयोविꣳशतिश्च मे त्रयोविꣳशतिश्च मे पञ्चविꣳशतिश्च मे पञ्चविꣳशतिश्च मे सप्तविꣳशतिश्च मे सप्तविꣳशतिश्च मे नवविꣳशतिश्च मे नवविꣳशतिश्च मऽएकत्रिꣳशच्च मऽएकत्रिꣳशच्च मे त्रयस्त्रिꣳशच्च मे यज्ञेन कल्प्पन्ताम् ॥२४॥

चतस्रश्च मेष्टौ च मेष्टौ च मे द्वादश च मे द्वादश च मे षोडश च मे षोडश च मे विꣳशतिश्च मे विꣳशतिश्च मे चतुर्विꣳशतिश्च मे चतुर्विꣳशतिश्च मेष्टाविꣳशतिश्च मेष्टाविꣳशतिश्च मे द्वात्रिꣳशच्च मे द्वात्रिꣳशच्च मे षट्त्रिꣳशच्च मे षट्त्रिꣳशच्च मे चत्त्वारिꣳशच्च मे चत्त्वारिꣳशच्च मे चतुश्चत्त्वारिꣳशच्च मे चतुश्चत्त्वारिꣳशच्च मेष्टाचत्त्वारिꣳशच्च मे यज्ञेन कल्प्पन्ताम् ॥२५॥

त्र्यविश्च मे त्र्यवी च मे दित्त्यवाट्च मे दित्त्यौही च मे पञ्चाविश्च मे पञ्चावी च मे त्रिवत्सश्च मे त्रिवत्सा च मे तुर्य्यवाट्च मे तुर्य्यौही च मे यज्ञेन कल्प्पन्ताम् ॥२६॥

पष्ठवाट्च मे पष्ठौही च मऽउक्षा च मे वशा च मऽऋषभश्च मे वेहच्च मेनड्वाँश्च मे धेनुश्च मे यज्ञेन कल्प्पन्ताम् ॥२७॥

॥८॥ वाजाय स्वाहा प्प्रसवाय स्वाहापिजाय स्वाहा क्क्रतवे स्वाहा वसवे स्वाहाहर्प्पतये स्वाहाह्ने मुग्ग्धाय स्वाहा मुग्ग्धाय वैनꣳशिनाय स्वाहा विनꣳशिनऽआन्त्यायनाय स्वाहान्त्याय भौवनाय स्वाहा भुवनस्य पतये स्वाहाधिपतये स्वाहा प्प्रजापतये स्वाहा । इयन्ते राण्मित्राय यन्तासि यमनऽऊर्जे त्वा वृष्ट्यै त्वा प्प्रजानान्त्वाधिपत्त्याय ॥२८॥

आयुर्य्यज्ञेन कल्प्पताम्प्राणो यज्ञेन कल्प्पताञ्चक्षुर्य्यज्ञेन कल्प्पताꣳ श्रोत्रँय्यज्ञेन कल्प्पताँव्वाग्यज्ञेन कल्प्पताम्मनो यज्ञेन कल्प्पतामात्त्मा यज्ञेन कल्प्पताम्ब्रह्मा यज्ञेन कल्प्पताञ्ज्योतिर्य्यज्ञेन कल्प्पताꣳ स्वर्य्यज्ञेन कल्प्पताम्पृष्ठँय्यज्ञेन कल्प्पताँय्यज्ञो यज्ञेन कल्प्पताम् । स्तोमश्च यजुश्चऽऋक्च साम च बृहच्च

रथन्तरञ्च। स्वर्द्देवाऽअगन्मामृताऽअभूम प्प्रजापतेः प्प्रजाऽअभूम वेट् स्वाहा ॥२९॥
॥९॥ वाजस्य नु प्प्रसवे मातरम्महीमदितिन्नाम वचसा करामहे ।
यस्यामिदँविश्श्वम्भुवनमाविवेश तस्यान्नो देवः सविता धर्म्म साविषत् ॥३०॥
विश्श्वेऽअद्य मरुतो विश्श्वऽऊती विश्श्वे भवन्त्वग्न्नयः समिद्धाः ।
विश्श्वे नो देवाऽअवसागमन्तु विश्श्वमस्तु द्रविणँवाजोऽअस्म्मे ॥३१॥
वाजो नः सप्त प्प्रदिशश्चतस्रो वा परावतः ।
वाजो नो विश्श्वैर्द्देवैर्द्धनसाताविहावतु ॥३२॥
वाजो नोऽअद्य प्प्रसुवाति दानँवाजो देवाँ२॥ऽऋतुभिः कल्प्पयाति ।
वाजो हि मा सर्व्ववीरञ्जजान विश्श्वाऽआशा वाजपतिर्ज्जयेयम् ॥३३॥
वाजः पुरस्तादुत मद्ध्यतो नो वाजो देवान्हविषा वर्द्धयाति ।
वाजो हि मा सर्व्ववीरञ्चकार सर्व्वाऽआशा वाजपतिर्ब्भवेयम् ॥३४॥
सम्मा सृजामि पयसा पृथिव्याः सम्मा सृजाम्म्यद्भिरोषधीभिः ।
सोहँवाजꣳ सनेयमग्ग्ने ॥३५॥
पयः पृथिव्याम्पयऽओषधीषु पयो दिव्यन्तरिक्क्षे पयो धाः ।
पयस्वतीः प्प्रदिशः सन्तु मह्यम् ॥३६॥
देवस्य त्वा सवितुः प्प्रसवेश्श्विनोर्ब्बाहुभ्याम्पूष्णो हस्ताभ्याम् ।
सरस्वत्यै वाचो यन्तुर्य्यन्त्रेणाग्ग्नेः साम्म्राज्ज्येनाभिषिञ्चामि ॥३७॥
॥१०॥ ऋताषाडृतधामाग्निर्ग्गन्धर्व्वस्तस्यौषधयोप्सरसो मुदो नाम ।
स नऽइदम्ब्रह्म क्क्षत्रम्पातु तस्म्मै स्वाहा वाट्ताभ्यः स्वाहा ॥३८॥
सꣳहितो विश्श्वसामा सूर्य्यो गन्धर्व्वस्तस्य मरीचयोप्सरसऽआयुवो नाम ।
स नऽइदम्ब्रह्म क्क्षत्रम्पातु तस्म्मै स्वाहा वाट्ताभ्यः स्वाहा ॥३९॥
सुषुम्णः सूर्य्यरश्मिश्चन्द्रमा गन्धर्व्वस्तस्य नक्क्षत्राण्यप्सरसो भेकुरयो नाम ।
स नऽइदम्ब्रह्म क्क्षत्रम्पातु तस्म्मै स्वाहा वाट्ताभ्यः स्वाहा ॥४०॥
इषिरो विश्श्वव्यचा वातो गन्धर्व्वस्तस्यापोऽअप्सरसऽऊर्ज्जो नाम ।
स नऽइदम्ब्रह्म क्क्षत्रम्पातु तस्म्मै स्वाहा वाट्ताभ्यः स्वाहा ॥४१॥
भुज्युः सुपर्ण्णो यज्ञो गन्धर्व्वस्तस्य दक्क्षिणाऽअप्सरस स्तावा नाम ।
स नऽइदम्ब्रह्म क्क्षत्रम्पातु तस्म्मै स्वाहा वाट्ताभ्यः स्वाहा ॥४२॥
प्रजापतिर्व्विश्श्वकर्म्मा मनो गन्धर्व्वस्तस्यऽऋक्सामान्यप्सरसऽएष्टयो नाम ।
स नऽइदम्ब्रह्म क्क्षत्रम्पातु तस्म्मै स्वाहा वाट्ताभ्यः स्वाहा ॥४३॥
स नो भुवनस्य पते प्प्रजापते यस्य तऽउपरि गृहा यस्य वेह ।
अस्म्मै ब्रह्मणेस्म्मै क्क्षत्राय महि शर्म्म यच्छ स्वाहा ॥४४॥
समुद्द्रोसि नभस्वानार्द्रदानुः शम्भूर्म्मयोभूरभि मा वाहि स्वाहा मारुतोसि मरुताङ्गणः
शम्भूर्म्मयोभूरभि मा वाहि स्वाहावस्यूरसि दुवस्वाञ्छम्भूर्म्मयोभूरभि मा वाहि
स्वाहा ॥४५॥
यास्तेऽअग्ग्ने सूर्य्ये रुचो दिवमातन्वन्ति रश्मिभिः ।
ताभिर्न्नोऽअद्य सर्व्वाभी रुचे जनाय नस्कृधि ॥४६॥
या वो देवाः सूर्य्ये रुचो गोष्वश्श्वेषु या रुचः ।
इन्द्राग्ग्नी ताभिः सर्व्वाभी रुचन्नो धत्त बृहस्पते ॥४७॥
रुचन्नो धेहि ब्राह्मणेषु रुचꣳ राजसु नस्कृधि ।
रुचँविश्श्येषु शूद्द्रेषु मयि धेहि रुचा रुचम् ॥४८॥
तत्त्वा यामि ब्रह्मणा वन्दमानस्तदा शास्ते यजमानो हविर्ब्भिः ।
अहेडमानो वरुणेह बोद्ध्युरुशꣳस मा नऽआयुः प्प्रमोषीः ॥४९॥
स्वर्ण्ण घर्म्मः स्वाहा स्वर्ण्णार्क्कः स्वाहा स्वर्ण्ण शुक्क्रः स्वाहा स्वर्ण्ण ज्ज्योतिः स्वाहा
स्वर्ण्ण सूर्य्यः स्वाहा ॥५०॥
॥११॥ अग्ग्निय्युनज्ज्मि शवसा घृतेन दिव्यꣳ सुपर्ण्णँवयसा बृहन्तम् ।
तेन वयङ्गमेम ब्रद्ध्नस्य विष्टपꣳ स्वो रुहाणाऽअधि नाकमुत्तमम् ॥५१॥
इमौ ते पक्क्षावजरौ पतत्रिणौ याभ्याꣳ रक्क्षाꣳस्यपहꣳस्यग्ग्ने ।
ताभ्याम्पतेम सुकृतामु लोकँय्यत्रऽऋषयो जग्ग्मुः प्प्रथमजाः पुराणाः ॥५२॥
इन्दुर्द्दक्क्षः श्श्येनऽऋतावा हिरण्ण्यपक्क्षः शकुनो भुरण्युः ।
महान्त्सधस्त्थे द्ध्रुवऽआनिषत्तो नमस्तेऽअस्तु मा मा हिꣳसीः ॥५३॥
दिवो मूर्द्धासि पृथिव्या नाभिरूर्ग्गपामोषधीनाम् ।
विश्श्वायुः शर्म्म सप्प्रथा नमस्प्पथे ॥५४॥
विश्श्वस्य मूर्द्धन्नधि तिष्ठसि श्रितः समुद्द्रे ते हृदयमप्स्वायुरपो दत्तोदधिम्भिन्त ।
दिवस्पर्ज्जन्यादन्तरिक्क्षात्पृथिव्यास्ततो नो वृष्ट्याव ॥५५॥
इष्टो यज्ञो भृगुभिराशीर्द्दा वसुभिः। तस्य नऽइष्टस्य प्प्रीतस्य द्रविणेहागमेः ॥५६॥

इष्टोऽअग्निराहुतः पिपर्त्तु नऽइष्टꣳ हविः । स्वगेदन्देवेभ्यो नमः ॥५७॥
॥१२॥ यदाकूतात्समसुस्रोद्धृदो वा मनसो वा सम्भृतञ्चक्षुषो वा ।
तदनु प्रेत सुकृतामु लोकँय्यत्रऽऋषयो जग्मुः प्रथमजाः पुराणाः ॥५८॥
एतꣳ सधस्थ परि ते ददामि यमावहाच्छेवधिञ्जातवेदाः ।
अन्वागन्ता यज्ञपतिर्वोऽअत्र तꣳ स्म जानीत परमे व्योमन् ॥५९॥
एतञ्जानाथ परमे व्योमन्देवाः सधस्था विद रूपमस्य ।
यदागच्छात्पथिभिर्देवयानैरिष्टापूर्त्ते कृणवाथाविरस्मै ॥६०॥
उद्बुध्यस्वाग्ने प्रतिजागृहि त्वमिष्टापूर्त्ते सꣳसृजेथामयञ्च ।
अस्मिन्त्सधस्थेऽअध्युत्तरस्मिन्विश्वे देवा यजमानश्च सीदत ॥६१॥
येन वहसि सहस्रँय्येनाग्ने सर्व्ववेदसम् ।
तेनेमँय्यज्ञन्नो नय स्वर्द्देवेषु गन्तवे ॥६२॥
प्रस्तरेण परिधिना स्रुचा वेद्या च बर्हिषा ।
ऋचेमँय्यज्ञन्नो नय स्वर्द्देवेषु गन्तवे ॥६३॥
यद्दत्तँय्यत्परादानँय्यत्पूर्त्तँय्याश्च दक्षिणाः ।
तदग्निर्वैश्वकर्म्मणः स्वर्द्देवेषु नो दधत् ॥६४॥
यत्र धाराऽअनपेता मधोर्घृतस्य च याः ।
तदग्निर्वैश्वकर्म्मणः स्वर्द्देवेषु नो दधत् ॥६५॥
अग्निरस्मि जन्मना जातवेदा घृतम्मे चक्षुरमृतम्मऽआसन् ।
अर्कस्त्रिधातू रजसो विमानोजस्रो घर्म्मो हविरस्मि नाम ॥६६॥
ऋचो नामास्मि यजूꣳषि नामास्मि सामानि नामास्मि । येऽअग्नयः
पाञ्चजन्याऽअस्याम्पृथिव्यामधि । तेषामसि त्वमुत्तमः प्र नो जीवातवे सुव ॥६७॥
॥१३॥ वार्त्रहत्याय शवसे पृतनाषाह्याय च । इन्द्र त्वावर्त्तयामसि ॥६८॥
सहदानुम्पुरुहूत क्षियन्तमहस्तमिन्द्र सम्पिणक्कुणारुम् ।
अभि वृत्रँव्वर्द्धमानम्पियारुमपादमिन्द्र तवसा जघन्थ ॥६९॥
वि नऽइन्द्र मृधो जहि नीचा यच्छ पृतन्यतः ।
योऽअस्माँ२ऽअभिदासत्यधरङ्गमया तमः ॥७०॥
मृगो न भीमः कुचरो गिरिष्ठाः परावतऽआजगन्था परस्याः ।
सृकꣳ सꣳशाय पविमिन्द्र तिग्मँव्वि शत्रून्ताढि वि मृधो नुदस्व ॥७१॥
वैश्वानरो नऽऊतयऽआप्रयातु परावतः । अग्निर्नः सुष्टुतीरुप ॥७२॥
पृष्टो दिवि पृष्टोऽअग्निः पृथिव्याम्पृष्टो विश्वाऽओषधीराविवेश ।
वैश्वानरः सहसा पृष्टोऽअग्निः स नो दिवा स रिषस्पातु नक्तम् ॥७३॥
अश्याम तङ्काममग्ने तवोतीऽअश्याम रयिꣳ रयिवः सुवीरम् ।
अश्याम वाजमभि वाजयन्तोश्याम द्युम्नमजराजरन्ते ॥७४॥
वयन्तेऽअद्य ररिमा हि काममुत्तानहस्ता नमसोपसद्य ।
यजिष्ठेन मनसा यक्षि देवानस्रेधता मन्मना विप्रोऽअग्ने ॥७५॥
धामच्छदग्निरिन्द्रो ब्रह्मा देवो बृहस्पतिः ।
सचेतसो विश्वे देवा यज्ञम्प्रावन्तु नः शुभे ॥७६॥
त्वँय्यविष्ठ दाशुषो नॄँः पाहि शृणुधी गिरः । रक्षा तोकमुत त्मना ॥७७॥

॥ इत्यष्टादशोऽध्यायः ॥

---

# अथैकोनविंशोऽध्यायः

**ऋषिः** (१) 'स्वाद्वीन्त्वा' इत्यारभ्य (९५) 'तेजः पशूनाम्' इत्यन्तानां सामान्यतः प्रजापतिरश्विनौ सरस्वती च ऋषयः। विशेषतश्च—
(२) 'परीतो षिञ्चता' इत्यस्य भारद्वाजः, (३) 'वायोः पूतः' इत्यादिद्वयोः (४) 'पुनाति ते' इत्यस्य चाभूतिः, (६) 'कुविदङ्ग यवमन्तः' इत्यस्य काक्षीवतः सुकीर्तिः, (१०) 'या व्याघ्रम्' इत्यस्य हैमवर्चिः, (३८) 'अग्न आयूꣳषि' इत्यस्य वैखानसः प्रजापतिः, (४९) 'उदीरतामवर' इत्यारभ्य (६१) 'अग्निष्वात्तानृतुमतः' इत्यन्तानां शङ्खः, (७२) 'सोमो राजा' इत्यारभ्य (७९) 'दृष्ट्वा परिस्रुतः' इत्यन्तानामिन्द्रः ॥

**देवता** (१) 'स्वाद्वीन्त्वा' इत्यस्य सुरासोमः, 'सोमोसि' 'अश्विभ्याम्पच्यस्व' 'सरस्वत्यै पच्यस्व' 'इन्द्राय सुत्राम्णे' इत्येषां सूर्यः।
(२) 'परीतो षिञ्चता' इत्यस्य (३) 'वायोः पूतः' इत्यादिद्वयोः (४) 'पुनाति ते' इत्यस्य च सोमः।
(५) 'ब्रह्म क्षत्रम्' इत्यस्य सुरासोमः।
(६) 'कुविदङ्ग यवमन्तः' 'उपयाम० अश्विभ्याम्' 'एष ते योनिः' इत्येषां पयोग्रहः।
(७) 'नाना हि' इत्यस्य सुरासोमः।
(८) 'उपयाम० आश्विनम्' इत्यस्य सुरा, 'एष ते योनिः' इत्यस्य सुराग्रहः।
(९) 'तेजोसि' 'वीर्यमसि' 'बलमसि' इत्येषां पयः, 'ओजोसि' 'मन्युरसि' 'सहोसि' इत्येषां सुरा।
(१०) 'या व्याघ्रम्' इत्यस्य विषूचिका।
(११) 'यदापिपेष' इत्यस्याग्निः, 'सम्पृच स्थ' इत्यस्य पयोग्रहाः, 'विपृच स्थ' इत्यस्य सुराग्रहाः।
(१२) 'देवा यज्ञम्' (१३) 'दीक्षायै रूपम्' (१४) 'आतिथ्यरूपम्' (१५) 'सोमस्य रूपम्' (१६) 'आसन्दी रूपम्' (१७) 'वेद्या वेदिः' (१८) 'हविर्धानं यत्' (१९) 'प्रैषेभिः प्रैषान्' (२०) 'पशुभिः पशून्' (२१) 'धानाः करम्भः' (२२) 'धानानां रूपम्' (२३) 'पयसो रूपम्' (२४) 'आश्रावयेति' (२५) 'अर्धऋचैरुक्थानाम्' (२६) 'अश्विभ्याम्प्रातःसवनम्' (२७) 'वायव्यैर्वायव्यान्' (२८) 'यजुर्भिराप्यन्ते' (२९) 'इडाभिर्भक्षान्' (३०) 'व्रतेन दीक्षाम्' (३१) 'एतावद्रूपम्' इत्येषां सोमः।

(३२) 'सुरावन्तम्बर्हिषदम्' (३३) 'यस्ते रसः' (३४) 'यमश्विना' (३५) 'यदत्र रिप्तम्' इत्येषामश्विसरस्वतीन्द्राः ।

(३६) 'पितृभ्यः स्वधायिभ्यः' 'पितामहेभ्यः स्वधायिभ्यः' 'प्रपितामहेभ्यः स्वधायिभ्यः' 'अक्षन्पितरः' 'अमीमदन्त पितरः' 'अतीतृपन्त पितरः' 'पितरः शुन्धध्वम्' इत्येषां (३७) 'पुनन्तु मा' इत्यादिद्वयोश्च पितरः ।

(३८) 'अग्न आयूंषि' इत्यस्याग्निः ।

(३९) 'पुनन्तु मा' इत्यस्य लिङ्गोक्ता ।

(४०) 'पवित्रेण पुनीहि' इत्यस्याग्निः ।

(४१) 'यत्ते पवित्रम्' इत्यस्याग्निर्ब्रह्म वा, 'ब्रह्म तेन' इत्यस्य ब्रह्म ।

(४२) 'पवमानः सः' इत्यस्य सोमः ।

(४३) 'उभाभ्यान्देव' इत्यस्य सविता ।

(४४) 'वैश्वदेवी पुनती' इत्यस्य विश्वे देवाः ।

(४५) 'ये समानाः समनसः पितरः' इत्यस्य पितरः ।

(४६) 'ये समानाः समनसो जीवाः' इत्यस्य यजमानाशीः ।

(४७) 'द्वे सृती' इत्यस्य देवयानपितृयाणौ ।

(४८) 'इदंॅ हविः' इत्यस्य यजमानाशीः ।

(४९) 'उदीरतामवरे' (५०) 'अङ्गिरसो नः' (५१) 'ये नः' (५२) 'त्वंॅ सोम प्रचिकितः' (५३) 'त्वया हि' (५४) 'त्वंॅ सोम पितृभिः' (५५) 'बर्हिषदः पितरः' (५६) 'आहम्पितॄन्' (५७) 'उपहूताः पितरः' (५८) 'आयन्तु नः' (५९) 'अग्निष्वात्ताः पितरः' (६०) 'ये अग्निष्वात्ताः' (६१) 'अग्निष्वात्तानृतुमतः' (६२) 'आच्या जानु' (६३) 'आसीनासो अरुणीनाम्' (६४) 'यमग्ने' (६५) 'यो अग्निः' (६६) 'त्वमग्ने' (६७) 'ये चेह' (६८) 'इदम्पितृभ्यः' (६९) 'अधा यथा' (७०) 'उशन्तस्त्वा' इत्येषां पितरः ।

(७१) 'अपाम्फेनेन' इत्यस्येन्द्रः ।

(७२) 'सोमो राजामृतम्' (७३) 'अद्भ्यः क्षीरम्' (७४) 'सोममद्भ्यः' (७५) 'अन्नात्परिस्रुतः' (७६) 'रेतो मूत्रम्' (७७) 'दृष्ट्वा रूपे' (७८) 'वेदेन रूपे' (७९) 'दृष्ट्वा परिस्रुतः' इत्येषां ग्रहाः ।

(८०) 'सीसेन तन्त्रम्' (८१) 'तदस्य रूपम्' (८२) 'तदश्विना' (८३) 'सरस्वती मनसा' (८४) 'पयसा शुक्रम्' (८५) 'इन्द्रः सुत्रामा' (८६) 'आन्त्राणि स्थालीः' (८७) 'कुम्भो वनिष्ठुः' (८८) 'मुखंॅ सदस्य' (८९) 'अश्विभ्याञ्चक्षुः' (९०) 'अविर्न' (९१) 'इन्द्रस्य रूपम्' (९२) 'आत्मन्नुपस्थे' (९३) 'अङ्गान्यात्मन्' (९४) 'सरस्वती योन्याम्' (९५) 'तेजः पशूनाम्' इत्येषामश्विसरस्वतीन्द्राः ॥

छन्दः (१) 'स्वाद्वीन्त्वा' इत्यस्यानुष्टुप्, (२) 'परीतो षिञ्चता' इत्यस्य बृहती, (३) 'वायोः पूतः' इत्यादिद्वयोः (४) 'पुनाति ते' इत्यस्य च गायत्री, (५) 'ब्रह्म क्षत्रम्' (६) 'कुविदङ्ग यवमन्तः' इत्यनयोस्त्रिष्टुप्, (७) 'नाना हि' इत्यस्य जगती, (१०) 'या व्याघ्रम्' इत्यस्यानुष्टुप्, (११) 'यदापिपेष' इत्यस्य बृहती, (१२) 'देवा यज्ञम्' इत्यारभ्य (३१) 'एतावद्रूपम्' इत्यन्तानामनुष्टुप्, (३२) 'सुरावन्तम्बर्हिषदम्' इत्यारभ्य (३५) 'यदत्र' इत्यन्तानां त्रिष्टुप्, (३७) 'पुनन्तु मा' इत्यादिद्वयोरनुष्टुप्, (३८) 'अग्न आयूंषि' इत्यस्य गायत्री, (३९) 'पुनन्तु मा' इत्यस्यानुष्टुप्, (४०) 'पवित्रेण पुनीहि' इत्यारभ्य (४३) 'उभाभ्यान्देव' इत्यन्तानां गायत्री, (४४) 'वैश्वदेवी पुनती' इत्यस्य त्रिष्टुप्, (४५) 'ये समानाः' इत्यादिद्वयोरनुष्टुप्, (४७) 'द्वे सृती' इत्यस्य त्रिष्टुप्, (४८) 'इदंॅ हविः' इत्यस्याष्टिः, (४९) 'उदीरतामवरे' इत्यारभ्य (५८) 'आयन्तु नः' इत्यन्तानां त्रिष्टुप्, (५९) 'अग्निष्वात्ताः पितरः' इत्यस्य जगती, (६०) 'ये अग्निष्वात्ताः' इत्यारभ्य (६३) 'आसीनासो अरुणीनाम्' इत्यन्तानां त्रिष्टुप्, (६४) 'यमग्ने' (६५) 'यो अग्निः' इत्यनयोरनुष्टुप्, (६६) 'त्वमग्ने' इत्यारभ्य (६९) 'अधा यथा' इत्यन्तानां त्रिष्टुप्, (७०) 'उशन्तस्त्वा' इत्यस्यानुष्टुप्, (७१) 'अपाम्फेनेन' इत्यस्य गायत्री, (७२) 'सोमो राजा' (७३) 'अद्भ्यः क्षीरम्' (७४) 'सोममद्भ्यः' इत्येषां महाबृहती, (७५) 'अन्नात्परिस्रुतः' इत्यस्यातिजगती, (७६) 'रेतो मूत्रम्' (७७) 'दृष्ट्वा रूपे' इत्यनयोरतिशक्करी, (७८) 'वेदेन रूपे' इत्यस्य महाबृहती, (७९) 'दृष्ट्वा परिस्रुतः' इत्यस्यातिजगती, (८०) 'सीसेन तन्त्रम्' इत्यारभ्य (९५) 'तेजः पशूनाम्' इत्यन्तानां जगती ॥

॥ हरिःॐ ॥

॥१॥ स्वाद्वीन्त्वा स्वादुना तीव्रान्तीव्रेणामृताममृतेन । मधुमतीम्मधुमता सृजामि सᳬ
सोमेन । सोमोस्यश्विभ्याम्पच्यस्व सरस्वत्यै पच्यस्वेन्द्राय सुत्राम्णे पच्यस्व ॥१॥
परीतो षिञ्चता सुतᳬ सोमो यऽउत्तमᳬ हविः ।
दधन्वा यो नर्य्योऽअप्स्वन्तरासुषाव सोममद्रिभिः ॥२॥
वायोः पूतः पवित्रेण प्रत्यङ्क्सोमोऽअतिद्रुतः । इन्द्रस्य युज्यः सखा । वायोः
पूतः पवित्रेण प्राङ्क्सोमोऽअतिद्रुतः । इन्द्रस्य युज्यः सखा ॥३॥
पुनाति ते परिस्रुतᳬ सोमᳬ सूर्य्यस्य दुहिता । वारेण शश्वता तना ॥४॥
ब्रह्म क्षत्रम्पवते तेजऽइन्द्रियᳬ सुरया सोमः सुतऽआसुतो मदाय ।
शुक्रेण देव देवताः पिपृग्धि रसेनान्नँय्यजमानाय धेहि ॥५॥
कुविदङ्ग यवमन्तो यवञ्चिद्यथा दान्त्यनुपूर्वँव्वियूय । इहेहैषाङ्कृणुहि भोजनानि ये
बर्हिषो नमऽउक्तिँय्यजन्ति । उपयामगृहीतोस्यश्विभ्यान्त्वा सरस्वत्यै त्वेन्द्राय
त्वा सुत्राम्णऽएष ते योनिस्तेजसे त्वा वीर्य्याय त्वा बलाय त्वा ॥६॥
नाना हि वान्देवहितᳬ सदस्कृतम्मा सᳬसृक्षाथाम्परमे व्योमन् । सुरा त्वमसि
शुष्मिणी सोमऽएष मा मा हिᳬसीः स्वाँय्योनिमाविशन्ती ॥७॥
उपयामगृहीतोस्याश्विनन्तेजः सारस्वतँव्वीर्य्यमैन्द्रम्बलम् ।
एष ते योनिर्म्मोदाय त्वानन्दाय त्वा महसे त्वा ॥८॥
तेजोसि तेजो मयि धेहि वीर्य्यमसि वीर्य्यम्मयि धेहि बलमसि बलम्मयि धेह्योजो-
जोस्योजो मयि धेहि मन्युरसि मन्युम्मयि धेहि सहोसि सहो मयि धेहि ॥९॥
या व्याघ्रँव्विषूचिकोभौ वृकञ्च रक्षति ।
श्येनम्पतत्रिणᳬ सिᳬहᳬ सेमम्पात्वᳬहसः ॥१०॥
यदापिपेष मातरम्पुत्रः प्रमुदितो धयन् ।
एतत्तदग्नेऽअनृणो भवाम्यहतौ पितरौ मया ।
सम्पृच स्थ सम्मा भद्रेण पृङ्क्त विपृच स्थ वि मा पाप्मना पृङ्क्त ॥११॥

॥२॥ देवा यज्ञमतन्वत भेषजम्भिषजाश्विना ।
वाचा सरस्वती भिषगिन्द्रायेन्द्रियाणि दधतः ॥१२॥
दीक्षायै रूपᳬ शष्पाणि प्रायणीयस्य तोक्मानि ।
क्रयस्य रूपᳬ सोमस्य लाजाः सोमांॅशवो मधु ॥१३॥

आतिथ्यरूपम्मासरम्महावीरस्य नग्नहुः ।
रूपमुपसदामेतत्तिस्रो रात्रीः सुरासुता ॥१४॥
सोमस्य रूपङ्क्रीतस्य परिस्रुत्परिषिच्यते ।
अश्विभ्यान्दुग्धम्भेषजमिन्द्रायैन्द्रꣳ सरस्वत्या ॥१५॥
आसन्दी रूपꣳ राजासन्द्यै वेद्यै कुम्भी सुराधानी ।
अन्तरऽउत्तरवेद्या रूपङ्कारोतरो भिषक् ॥१६॥
वेद्या वेदिः समाप्यते बर्हिषा बर्हिरिन्द्रियम् ।
यूपेन यूपऽआप्यते प्रणीतोऽअग्निरग्निना ॥१७॥
हविर्धानँय्यदश्विनाग्नीध्रँय्यत्सरस्वती ।
इन्द्रायैन्द्रꣳ सदस्कृतम्पत्नीशालङ्गार्हपत्यः ॥१८॥
प्रैषेभिः प्रैषानाप्नोत्याप्रीभिराप्रीर्यज्ञस्य ।
प्रयाजेभिरनुयाजान्वषट्कारेभिराहुतीः ॥१९॥
पशुभिः पशूनाप्नोति पुरोडाशैर्हवीꣳष्या ।
छन्दोभिः सामिधेनीर्याज्याभिर्वषट्कारान् ॥२०॥
धानाः करम्भः सक्तवः परीवापः पयो दधि ।
सोमस्य रूपꣳ हविषऽआमिक्षा वाजिनम्मधु ॥२१॥
धानानाꣳ रूपङ्कुवलम्परीवापस्य गोधूमाः ।
सक्तूनाꣳ रूपम्बदरमुपवाकाः करम्भस्य ॥२२॥
पयसो रूपँय्यद्यवा दध्नो रूपङ्कर्कन्धूनि ।
सोमस्य रूपँवाजिनꣳ सौम्यस्य रूपमामिक्षा ॥२३॥
आश्रावयेति स्तोत्रियाः प्रत्याश्रावोऽअनुरूपः ।
यजेति धाय्यारूपम्प्रगाथा येयजामहाः ॥२४॥
अर्द्धऽऋचैरुक्थानाꣳ रूपम्पदैराप्नोति निविदः ।
प्रणवैः शस्त्राणाꣳ रूपम्पयसा सोमऽआप्यते ॥२५॥
अश्विभ्याम्प्रातःसवनमिन्द्रेणैन्द्रम्माध्यन्दिनम् ।
वैश्वदेवꣳ सरस्वत्या तृतीयमाप्तꣳ सवनम् ॥२६॥
वायव्यैर्वायव्यान्याप्नोति सतेन द्रोणकलशम् ।
कुम्भीभ्यामम्भृणौ सुते स्थालीभि स्थालीराप्नोति ॥२७॥
यजुर्भिराप्यन्ते ग्रहा ग्रहै स्तोमाश्च विष्टुतीः ।
छन्दोभिरुक्थाशस्त्राणि साम्नावभृथऽआप्यते ॥२८॥
इडाभिर्भक्षानाप्नोति सूक्तवाकेनाशिषः ।
शंय्युना पत्नीसँय्याजान्त्समिष्टयजुषा सꣳस्थाम् ॥२९॥
व्रतेन दीक्षामाप्नोति दीक्षयाप्नोति दक्षिणाम् ।
दक्षिणा श्रद्धामाप्नोति श्रद्धया सत्यमाप्यते ॥३०॥
एतावद्रूपँय्यज्ञस्य यद्देवैर्ब्रह्मणा कृतम् ।
तदेतत्सर्वमाप्नोति यज्ञे सौत्रामणी सुते ॥३१॥

॥३॥ सुरावन्तम्बर्हिषदꣳ सुवीरँय्यज्ञꣳ हिन्वन्ति महिषा नमोभिः ।
दधानाः सोमन्दिवि देवतासु मदेमेन्द्रँय्यजमानाः स्वर्काः ॥३२॥
यस्ते रसः सम्भृतऽओषधीषु सोमस्य शुष्मः सुरया सुतस्य ।
तेन जिन्व यजमानम्मदेन सरस्वतीमश्विनाविन्द्रमग्निम् ॥३३॥
यमश्विना नमुचेरासुरादधि सरस्वत्यसुनोदिन्द्रियाय ।
इमन्तꣳ शुक्रम्मधुमन्तमिन्दुꣳ सोमꣳ राजानमिह भक्षयामि ॥३४॥
यदत्र रिप्तꣳ रसिनः सुतस्य यदिन्द्रोऽअपिबच्छचीभिः ।
अहन्तदस्य मनसा शिवेन सोमꣳ राजानमिह भक्षयामि ॥३५॥
पितृभ्यः स्वधायिभ्यः स्वधा नमः पितामहेभ्यः स्वधायिभ्यः स्वधा नमः
प्रपितामहेभ्यः स्वधायिभ्यः स्वधा नमः । अक्षन्पितरोमीमदन्त पितरोतीतृपन्त पितरः पितरः शुन्धद्ध्वम् ॥३६॥
पुनन्तु मा पितरः सोम्यासः पुनन्तु मा पितामहाः पुनन्तु प्रपितामहाः ।
पवित्रेण शतायुषा । पुनन्तु मा पितामहाः पुनन्तु प्रपितामहाः । पवित्रेण शतायुषा विश्वमायुर्व्यश्नवै ॥३७॥
अग्नऽआयूꣳषि पवसऽआसुवोर्ज्जमिषञ्च नः । आरे बाधस्व दुच्छुनाम् ॥३८॥
पुनन्तु मा देवजनाः पुनन्तु मनसा धियः ।
पुनन्तु विश्वा भूतानि जातवेदः पुनीहि मा ॥३९॥
पवित्रेण पुनीहि मा शुक्रेण देव दीद्यत् । अग्ने क्रत्वा क्रतूँ१॥रनु ॥४०॥
यत्ते पवित्रमर्चिष्यग्ने विततमन्तरा । ब्रह्म तेन पुनातु मा ॥४१॥
पवमानः सोऽअद्य नः पवित्रेण विचर्षणिः । यः पोता स पुनातु मा ॥४२॥

उभाभ्यान्देव सवितः पवित्रेण सवेन च । माम्पुनीहि विश्वतः ॥४३॥
वैश्वदेवी पुनती देव्यागाद्यस्यामिमा बह्व्यस्तन्वो वीतपृष्ठाः ।
तया मदन्तः सधमादेषु वयꣳ स्याम पतयो रयीणाम् ॥४४॥
ये समानाः समनसः पितरो यमराज्ये ।
तेषाँल्लोकः स्वधा नमो यज्ञो देवेषु कल्पताम् ॥४५॥
ये समानाः समनसो जीवा जीवेषु मामकाः ।
तेषाꣳ श्रीर्म्मयि कल्पतामस्मिँल्लोके शतꣳ समाः ॥४६॥
द्वे सृतीऽअशृणवम्पितॄणामहन्देवानामुत मर्त्त्यानाम् ।
ताभ्यामिदँविश्वमेजत्समेति यदन्तरा पितरम्मातरञ्च ॥४७॥
इदꣳ हविः प्प्रजननम्मेऽअस्तु दशवीरꣳ सर्व्वगणꣳ स्वस्तये ।
आत्मसनि प्प्रजासनि पशुसनि लोकसन्यभयसनि ।
अग्निः प्प्रजाम्बहुलाम्मे करोत्वन्नम्पयो रेतोऽअस्मासु धत्त ॥४८॥

॥४॥ उदीरतामवरऽउत्परासऽउन्मध्यमाः पितरः सोम्म्यासः ।
असुँयऽईयुरवृकाऽऋतज्ञास्ते नोवन्तु पितरो हवेषु ॥४९॥
अङ्गिरसो नः पितरो नवग्ग्वाऽअथर्व्वाणो भृगवः सोम्म्यासः ।
तेषाँवयꣳ सुमतौ यज्ञियानामपि भद्रे सौमनसे स्याम ॥५०॥
ये नः पूर्व्वे पितरः सोम्म्यासोनूहिरे सोमपीथँवसिष्ठाः ।
तेभिर्यमः सꣳरराणो हवीꣳष्युशन्नुशद्भिः प्प्रतिकाममत्तु ॥५१॥
त्वꣳ सोम प्प्रचिकितो मनीषा त्वꣳ रजिष्ठमनुनेषि पन्थाम् ।
तव प्प्रणीती पितरो नऽइन्दो देवेषु रत्नमभजन्त धीराः ॥५२॥
त्वया हि नः पितरः सोम पूर्व्वे कर्म्माणि चक्रुः पवमान धीराः ।
वन्वन्नवातः परिधीँ१॥रपोर्णु वीरेभिरश्वैर्म्मघवा भवा नः ॥५३॥
त्वꣳ सोम पितृभिः सँविदानोनु द्यावापृथिवीऽआततन्थ ।
तस्मै तऽइन्दो हविषा विधेम वयꣳ स्याम पतयो रयीणाम् ॥५४॥
बर्हिषदः पितरऽऊत्त्यर्व्वागिमा वो हव्या चकृमा जुषद्ध्वम् ।
तऽआगतावसा शन्तमेनाथा नः शँय्योररपो दधात ॥५५॥
आहम्पितॄन्त्सुविदत्राँ२॥ऽअवित्सि नपातञ्च विक्क्रमणञ्च विष्णोः ।
बर्हिषदो ये स्वधया सुतस्य भजन्त पित्वस्तऽइहागमिष्ठाः ॥५६॥
उपहूताः पितरः सोम्म्यासो बर्हिष्येषु निधिषु प्प्रियेषु ।
तऽआगमन्तु तऽइह श्रुवन्त्वधिब्रुवन्तु तेवन्त्वस्मान् ॥५७॥
आयन्तु नः पितरः सोम्म्यासोग्निष्वात्ताः पथिभिर्द्देवयानैः ।
अस्मिन्यज्ञे स्वधया मदन्तोधिब्रुवन्तु तेवन्त्वस्मान् ॥५८॥
अग्निष्वात्ताः पितरऽएह गच्छत सदःसदः सदत सुप्प्रणीतयः ।
अत्ता हवीꣳषि प्प्रयतानि बर्हिष्यथा रयिꣳ सर्व्ववीरन्दधातन ॥५९॥
येऽअग्निष्वात्ता येऽअनग्निष्वात्ता मद्ध्ये दिवः स्वधया मादयन्ते ।
तेभ्यः स्वराडसुनीतिमेताँय्यथावशन्तन्वङ्कल्पयाति ॥६०॥
अग्निष्वात्तानृतुमतो हवामहे नाराशꣳसे सोमपीथँयऽआशुः ।
ते नो विप्रासः सुहवा भवन्तु वयꣳ स्याम पतयो रयीणाम् ॥६१॥

॥५॥ आच्या जानु दक्षिणतो निषद्येमँयज्ञमभिगृणीत विश्वे ।
मा हिꣳसिष्ट पितरः केनचिन्नो यद्वऽआगः पुरुषता कराम ॥६२॥
आसीनासोऽअरुणीनामुपस्थे रयिन्धत्त दाशुषे मर्त्त्याय ।
पुत्रेभ्यः पितरस्तस्य वस्वः प्प्रयच्छत तऽइहोर्ज्जन्दधात ॥६३॥
यमग्ने कव्यवाहन त्वञ्चिन्मन्न्यसे रयिम् ।
तन्नो गीर्भिः श्रवाय्यन्देवत्रा पनया युजम् ॥६४॥
योऽअग्निः कव्यवाहनः पितॄन्यक्षदृतावृधः ।
प्रेदु हव्यानि वोचति देवेभ्यश्च पितृभ्यऽआ ॥६५॥
त्वमग्नऽईडितः कव्यवाहनावाड्ढव्यानि सुरभीणि कृत्वी ।
प्रादाः पितृभ्यः स्वधया तेऽअक्षन्नद्धि त्वन्देव प्प्रयता हवीꣳषि ॥६६॥
ये चेह पितरो ये च नेह याँश्च विद्म याँ२॥ऽउ च न प्प्रविद्म ।
त्वँवेत्थ यति ते जातवेदः स्वधाभिर्य्यज्ञꣳ सुकृतञ्जुषस्व ॥६७॥
इदम्पितृभ्यो नमोऽअस्त्वद्य ये पूर्व्वासो यऽउपरासऽईयुः ।
ये पार्त्थिवे रजस्या निषत्ता ये वा नूनꣳ सुवृजनासु विक्षु ॥६८॥
अधा यथा नः पितरः परासः प्प्रत्नासोऽअग्नऽऋतमाशुषाणाः ।
शुचीदयन्दीधितिमुक्थशासः क्षामा भिन्दन्तोऽअरुणीरपव्रन् ॥६९॥
उशन्तस्त्वा निधीमह्युशन्तः समिधीमहि ।
उशन्नुशतऽआवह पितॄन्हविषेऽअत्तवे ॥७०॥